॥ ओ३म् ॥

# यजुर्वेदसंहितायाम्

## प्रथमोऽध्यायः ॥

—:o:—

परमेष्ठी प्रजापतिर्ऋषिः । १—३१ ।

देवता—सविता १, ३, १०, २०, २५, २६ यज्ञः २, ७, १४, १५, २१, २७—३१ विष्णुः ४, ६ अग्निः ५, ८, ११, १७—१९, २३ प्रजापतिः ९ अप्सवितारौ १२ इन्द्रः[उ], अग्निः[क], यज्ञः[र], १३ वायुः[क], सविता[र], १६ यज्ञः[क], अग्निसवितारौ[र], २२ द्योविद्युतौ २४ ।

छन्दः—स्वराड्बृहती[क] ब्राह्म्युष्णिक्[र] १ स्वराडार्षी त्रिष्टुप् २ भुरिग्जगती ३ अनुष्टुप् ४ आर्षी त्रिष्टुप् ५ आर्षी पङ्क्तिः ६ प्राजापत्या जगती ७ अतिजगती ८ निचृत् त्रिष्टुप् ९ भुरिग्बृहती १० स्वराड्जगती ११, १४ स्वराट् त्रिष्टुप् १२, ३० निचृदुष्णिक्[उ], विराड्गायत्री[क], भुरिगुष्णिक्[र] १३ निचृज्जगती[क], याजुषी पङ्क्तिः[र] १५ विराड्गायत्री[र] ब्राह्मी त्रिष्टुप्[क] १६ ब्राह्मी पङ्क्तिः १७ ब्राह्मी जगती[उ], ब्राह्मी त्रिष्टुप्[क], आर्ची पङ्क्तिः[र] १८ निचृद्ब्राह्मी त्रिष्टुप् १९ विराड् ब्राह्मी त्रिष्टुप् २०, २५ गायत्री[क], विराट् पङ्क्तिः २१ स्वराट् त्रिष्टुप्[क], गायत्री[र] २२ बृहती २३ स्वराड् ब्राह्मी पङ्क्तिः २४ स्वराड् ब्राह्मी पङ्क्तिः[क] भुरिग्ब्राह्मी पङ्क्तिः[र] २६ ब्राह्मी त्रिष्टुप् २७ विराड् ब्राह्मी पङ्क्तिः २८ भुरिग् जगती[क], त्रिष्टुप्[र] २९ जगती[क], अनुष्टुप्[र] ३१ ।

स्वरः—मध्यमः[क], ऋषभः[र] १ धैवतः २, ५, ६, १२, १९, २०, २५, २७, ३० निषादः ३, ७, ८, ११, १४, गान्धारः ४, पञ्चमः ९, १७, २३, २६, २८ मध्यमः १०, २३ ऋषभः[उ], [र], षड्जः[क] १३ निषादः[क] पञ्चमः[र] १५ धैवतः[क], षड्जः[र] १६ ऋषभः[उ] धैवतः[क] पञ्चमः[र] १८ षड्जः[क] पञ्चमः[र] २१ धैवतः[क], षड्जः[र] २२ निषादः[क], धैवतः[र] २९ निषादः[क], गान्धारः[र] ३१ ॥

॥ ओ३म् ॥ इषे त्वोर्जे त्वा वायवं स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मण आप्यायध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा मा वस्तेन ईशत माघशंꣳसो ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥१॥ वसोः पवित्रमसि द्यौरसि पृथिव्यसि मातरिश्वनो घर्मोसि विश्वधा असि । परमेण धाम्ना दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत् ॥ २॥ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ॥ ३ ॥ सा विश्वायुः सा विश्वकर्मा सा विश्वधायाः । इन्द्रस्य त्वा भागꣳसोमेना तनच्मि विष्णो हव्यꣳरक्ष ॥ ४ ॥ अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् । इदमहमनृतात्सत्यमुपैमि ॥ ५ ॥ कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति । कर्मणे वां वेषाय वाम् ॥ ६ ॥ प्रत्युष्टꣳरक्षः प्रत्युष्टा अरातयो निष्टप्तꣳरक्षो निष्टप्ता अरातयः । उर्वन्तरिक्षमन्वेमि ॥ ७ ॥ धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वामः । देवानामसि वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् ॥८॥ अह्रुतमसि हविर्धानं दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत् । विष्णुस्त्वा क्रमतामुरु वातायापहतꣳ रक्षो यच्छन्तां पञ्च ॥ ९ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अग्नये जुष्टं गृह्णाम्यग्नीषोमाभ्यां जुष्टं गृह्णामि ॥१०॥ भूताय त्वा नारातये स्वरभिविख्येषं दृꣳहन्तां दुर्याः पृथिव्यामुर्वन्तरिक्षमन्वेमि । पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थेऽग्ने हव्यꣳ रक्ष ॥ ११ ॥ पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । देवीरापो अग्रेगुवो अग्रेपुवोऽग्र इममद्य यज्ञं नयताग्रे यज्ञपतिꣳ सुधातुं यज्ञपतिं देवयुवम् ॥१२॥ युष्मा इन्द्रो वृणीत वृत्रतूर्य्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य्ये प्रोक्षिताः स्थ । अग्नये त्वा जुष्टं प्रोक्षाम्यग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि । दैव्याय कर्मणे शुन्धध्वं देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि ॥१३॥ शर्म्मास्यवधूतꣳ रक्षोऽवधूता अरातयोऽदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु । अद्रिरसि वानस्पत्यो ग्रावासि पृथुबुध्नः प्रति त्वादित्यास्त्वग्वेत्तु ॥ १४ ॥ अग्नेस्तनूरसि वाचो विसर्जनन्देववीतये त्वा गृह्णामि बृहद्ग्रावासि वानस्पत्यः स इदन्देवेभ्यो हविः शमीष्व सुशमि शमीष्व । हविष्कृदेहि हविष्कृदेहि ॥१५॥ कुक्कुटोसि मधुजिह्व इषमूर्जमावद त्वया वयꣳ सङ्घातꣳ सङ्घातं जेष्म वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्तु परापूतꣳ रक्षः परापूता अरातयोऽपहतꣳ रक्षो वायुर्वो विविनक्तु देवो वः सविता

हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना ॥ १६ ॥ धृष्टिरस्यपाग्ने अग्नि-
मामादं जहि निष्क्रव्याद्ꣳ सेधा देवयजं वह । ध्रुवमसि पृथिवीं दृꣳह ब्रह्मवनि
त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय ॥ १७ ॥ अग्ने ब्रह्म गृभ्णीष्व
धरुणमस्यन्तरिक्षन्दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य
वधाय । धर्त्रमसि दिवन्दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृ-
व्यस्य वधाय । विश्वाभ्यस्त्वाशाभ्य उपदधामि चितस्थोर्ध्वचितो भृगूणामङ्गिर-
सां तपसा तप्यध्वम् ॥ १८ ॥ शर्मास्यवधूतꣳरक्षोवधूता अरातयोऽदित्यास्त्वग-
सि प्रति त्वादितिर्वेत्तु । धिषणासि पर्वती प्रति त्वादित्यास्त्वग्वेत्तु दिवस्कम्भ-
नीरसि धिषणासि पार्वतेयी प्रति त्वा पर्वती वेत्तु ॥ १९ ॥ धान्यमसि धिनुहि
देवान् प्राणाय त्वोदानाय त्वा व्यानाय त्वा । दीर्घामनुप्रसितिमायुषेधान्देवो वः
सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयो-
ऽसि ॥ २० ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
संवपामि समाप ओषधीभिः समोषधयो रसेन सꣳ रेवतीर्जगतीभिः पृच्यन्ताꣳ
सम्मधुमतीर्म्मधुमतीभिः पृच्यन्ताम् ॥ २१ ॥ जनयत्यै त्वा संयौमीदमग्नेरिदम-
ग्नीषोमयोरिषे त्वा घर्मोऽसि विश्वायुरुरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्
अग्निष्टे त्वचं मा हिꣳसीद्देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधिनाके ॥ २२ ॥
मा भेर्मा संविक्था अतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूयात्त्रिताय त्वा द्विताय
त्वैकताय त्वा ॥ २३ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ता-
भ्याम् । आददेऽध्वरकृतं देवेभ्य इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा
वायुरसि तिग्मतेजा द्विषतो वधः ॥ २४ ॥ पृथिवि देवयजन्योषध्यास्ते मूलम्मा
हिꣳसिषं व्रजङ्गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याꣳ
शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् ॥ २५ ॥ अपाररुं
पृथिव्यै देवयजनाद्वध्यासं व्रजङ्गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परम-
स्यां पृथिव्याꣳ शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् ।
अररो दिवं मा पप्तो द्रप्सस्ते द्यां मा स्कन् व्रजङ्गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान
देव सवितः परमस्यां पृथिव्याꣳ शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्त-
मतो मा मौक् ॥ २६ ॥ गायत्रेण त्वा छन्दसा परिगृह्णामि त्रैष्टुभेन त्वा छन्दसा
परिगृह्णामि जागतेन त्वा छन्दसा परिगृह्णामि । सुक्ष्मा चासि शिवा चासि स्यो-
ना चासि सुषदा चास्यूर्जस्वती चासि पयस्वती च ॥ २७ ॥ पुरा क्रूरस्य विसृ-

द्यौर्विरप्शिन्नदाघाय पृथिवीं जीवदानुम् । यामैरयँश्चन्द्रमसि स्वधाभिस्तामु धीरासो अनुदिश्य यजन्ते । प्रोक्षणीरासादय द्विषतो वधोसि ॥ २८ ॥ प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳ रक्षो निष्टप्ता अरातयः । अनिशितोसि सपत्नक्षिद्वाजिनं त्वा वाजेध्यायै सम्मार्ज्मि । प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳ रक्षो निष्टप्ता अरातयः । अनिशितासि सपत्नक्षिद्वाजिनीं त्वा वाजेध्यायै सम्मार्ज्मि ॥ २९ ॥ अदित्यै रास्नासि विष्णोर्वेष्पोस्यूर्ज्जे त्वादब्धेन त्वा चक्षुषावपश्यामि अग्नेर्जिह्वासि सुहूर्देवेभ्यो धाम्ने धाम्ने मे भव यजुषे यजुषे ॥३०॥ सवितुस्त्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः । सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः । तेजोसि शुक्रमस्यमृतमसि धाम नामासि प्रियन्देवानामनाधृष्टं देवयजनमसि ॥ ३१ ॥

॥ इति प्रथमोध्यायः ॥

---

# ॥ अथ द्वितीयोऽध्यायः ॥

---

परमेष्ठी प्रजापतिर्ऋषिः १—१६, १८—२० देवलः १७ वामदेवः २१—३४ ।

देवता—यज्ञः १, २, ५ अग्निः ३, ४, ७, ९, १४, १७, २८—३० विष्णुः ६, ८, २५ इन्द्रः १०, २२ द्यावापृथिवी ११ सविता १२ बृहस्पतिः १३ अग्निषोमौ इन्द्राग्नी १५ द्यावापृथिव्यौ मित्रावरुणौ च अग्निः १६ विश्वेदेवाः १८, अग्निवायू १९ अग्निसरस्वत्यौ २० प्रजापतिः २१, २३ त्वष्टा २४ ईश्वरः २६ पितरः ३१—३३ आपः ३४ ।

छन्दः–निचृत्पंक्तिः १ स्वराड्जगती २ भुरिगार्षी त्रिष्टुप्, आर्चीपंक्तिः, पंक्तिः ३ गायत्री ४, ३३ निचृद्ब्राह्मी बृहती ५ ब्राह्मीत्रिष्टुप्, निचृत्त्रिष्टुप् ६ भुरिक्पंक्तिः ७, १९, ३० विराट् पंक्तिः ८ जगती ९, १७ भुरिग्ब्राह्मी पंक्तिः १० ब्राह्मीबृहती ११ भुरिग्बृहती १२ विराड् जगती १३ अनुष्टुप्, निचृद् गायत्री १४

ब्राह्मी बृहती[क], अतिजगती[र] १५ निचृदार्षी पङ्क्तिः[क], विराट् त्रिष्टुप्[र] १६ स्वराट् त्रिष्टुप् १८ भुरिग्ब्राह्मी त्रिष्टुप् २० भुरिग् ब्राह्मी बृहती २१ विराट् त्रिष्टुप् २२, २४ निचृद्बृहती २३ निचृदार्षी[उ], आर्षी पङ्क्तिः[क], जगती[र] २५ उष्णिक् २६ निचृत्पङ्क्तिः[क] गायत्री[र] २७ भुरिगुष्णिक् २८, ३४ स्वराडार्षी अनुष्टुप् २९ बृहती ३१ ब्राह्मी बृहती[क], निचृ-द्बृहती[र] ३२ ॥

स्वरः—पञ्चमः १, ७, ८, १०, १९, ३०, ३२ निषादः २, ९, १३, १७ धैवतः[र], पञ्चमः[क], [र] ३ षड्जः ४, ३३ मध्यमः ५, ११, १२, २१, २३, ३१ धैवतः ६, १८, २०, २२, २४ गान्धारः[क], षड्जः[र] १४ मध्यमः[क], निषादः[र] १५, पञ्चमः[क], धैवतः[र] १६ पञ्चमः[उ], [क] निषादः[र] २५ ऋषभः २६, २८, ३४ पञ्चमः[क] षड्जः[र] २७ गान्धारः २९ ॥

॥ ओ३म् ॥ कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामि वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामि बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि ॥ १ ॥ अदित्यै व्युन्दनमसि विष्णोस्तुपोऽस्यूर्णम्रदसं त्वा स्तृणामि स्वासस्थान् देवेभ्यो भुवपतये स्वाहा भुवनपतये स्वाहा भूतानाम्पतये स्वाहा ॥ २ ॥ गन्धर्वस्त्वा विश्वावसुः परि दधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः[उ] । इन्द्रस्य बाहुरसि द-क्षिणो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः[क] । मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः[र] ॥ ३ ॥ वीतिहोत्रन्त्वा कवे द्युमन्तꣳ समिधीमहि । अग्ने बृहन्तमध्वरे ॥ ४ ॥ समिदसि सूर्यस्त्वा पुरस्तात् पातु कस्याश्चिदभिशस्त्यै । सवितुर्बाहू स्थऽऊर्ण-म्रदसन्त्वा स्तृणामि स्वासस्थन्देवेभ्य आ त्वा वसवो रुद्रा आदित्याः सदन्तु ॥ ५ ॥ घृताच्यसि जुहूर्नाम्ना सेदम्प्रियेण धाम्ना प्रियꣳ सद आसीद घृताच्यस्युपभृन्नाम्ना सेदम्प्रियेण धाम्ना प्रियꣳ सद आसीद घृताच्यसि ध्रुवा नाम्ना सेदं प्रियेण धाम्ना प्रियꣳ सद आसीद[क] । प्रियेण धाम्ना प्रियꣳ सद आसीद ध्रुवा असदन्नृत-स्य योनौ ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञन्यम्[र] ॥ ६ ॥ अग्ने वाजजिद्वाजन्त्वा सरिष्यन्तं वाजजितꣳ सम्मार्ज्मि । नमो देवेभ्यः स्वधा पितृ-भ्यः सुयमे मे भूयास्तम् ॥ ७ ॥ अस्कन्नमद्य देवेभ्य आज्यꣳ संभ्रियासमङ्घ्रिणा विष्णो मा त्वाव क्रमिषं वसुमतीमग्ने ते छायामुपस्थेषं विष्णो स्थानमसीत इन्द्रो वीर्यमकृणोदूर्ध्वोऽध्वरऽआस्थात् ॥ ८ ॥ अग्ने वेर्होत्रं वेर्दूत्यमवतान्त्वान्द्यावापृथिवी

अव त्वं द्यावापृथिवी स्विष्टकृद्देवेभ्य इन्द्र आज्येन हविषा भूत्स्वाहा संज्योतिषा ज्योतिः ॥ ९ ॥ मयीदमिन्द्र इन्द्रियं दधात्वस्मान् रायो मघवानः सचन्ताम् । अस्माकꣳ सन्त्वाशिषः सत्या नः सन्त्वाशिष उपहूता पृथिवी मातोप मां पृथिवी माता ह्वयतामग्निराग्नीध्रात्स्वाहा ॥ १० ॥ उपहूतो द्यौष्पितोप मां द्यौष्पिता ह्वयतामग्निराग्नीध्रात्स्वाहा । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । प्रतिगृह्णाम्यग्नेष्ट्वास्येन प्राश्नामि ॥ ११ ॥ एतन्ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे । तेन यज्ञमव तेन यज्ञपतिन्तेन मामव ॥ १२ ॥ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳसमिमन्दधातु । विश्वे देवास इह मादयन्तामो३म्प्रतिष्ठ ॥ १३ ॥ एषा ते अग्ने समित्तया वर्धस्व चाचप्यायस्व । वर्धिषीमहि च वयमा च प्यासिषीमहि [क] । अग्ने वाजजिद्वाजं त्वा ससृवाꣳसं वाजजितꣳ संमार्ज्मि [र] ॥ १४ ॥ अग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि । अग्नीषोमौ तमप नुदतां योऽस्मान् द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामि [क] । इन्द्राग्न्योरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि । [र] इन्द्राग्नी तमप नुदतां योऽस्मान् द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामि [र] ॥ १५ ॥ वसुभ्यस्त्वा रुद्रेभ्यस्त्वादित्येभ्यस्त्वा संजानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्यावताम् [क] । व्यन्तु वयोक्तꣳ रिहाणा मरुतां पृषतीर्गच्छ वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावह । चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि [र] ॥ १६ ॥ यं परिधिं पर्यधत्था अग्ने देवपणिभिर्गुह्यमानः । तन्त एतमनुजोषं भराम्येष नेत्त्वदपचेतयाता अग्नेः प्रियं पाथोऽपीतम् ॥१७॥ सꣳस्रवभागा स्थेषा बृहन्तः प्रस्तरेष्ठाः परिधेयाश्च देवाः । इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन्बर्हिषि मादयध्वꣳ स्वाहा वाट् ॥ १८ ॥ घृताची स्थो धुर्यौ पातꣳ सुम्ने स्थः सुम्ने मा धत्तम् । यज्ञ नमश्च त उप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्व ॥१९॥ अग्नेऽदब्धायोऽशीतम पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्या अविषन्नः पितुं कृणु सुषदा योनौ स्वाहा वाडग्नये संवेशपतये स्वाहा सरस्वत्यै यशोभगिन्यै स्वाहा ॥२०॥ वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूयाः । देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं देव यज्ञꣳ स्वाहा वाते धाः ॥२१॥ संबर्हिरङ्क्ताꣳ हविषा घृतेन समादित्यैर्वसुभिः सम्मरुद्भिः । समिन्द्रो विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत् स्वाहा ॥२२॥ कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति । पोषाय रक्षसां भागोऽसि ॥२३॥

संवर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳ शिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥२४॥ दिवि विष्णुर्व्यक्रꣳस्त जागतेन छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रꣳस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । पृथिव्यां विष्णुर्व्यक्रꣳस्त गायत्रेण छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽस्मादन्नादस्यै प्रतिष्ठाया अगन्म स्वः संज्योतिषाभूम ॥२५॥ स्वयंभूरसि श्रेष्ठो रश्मिर्वर्चोदा असि वर्चो मे देहि । सूर्यस्यावृतमन्वावर्ते ॥ २६ ॥ अग्ने गृहपते सुगृहपतिस्त्वयाऽग्नेहं गृहपतिना भूयासꣳसुगृहपतिस्त्वं मयाऽग्ने गृहपतिना भूयाः । अस्थूरि णौ गार्हपत्यानि सन्तु शतꣳहिमाः सूर्यस्यावृतमन्वावर्ते ॥ २७ ॥ अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि । इदमहं य एवास्मि सोऽस्मि ॥२८॥ अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा । अपहता असुरा रक्षाꣳसि वेदिषदः ॥२९॥ ये रूपाणि प्रति मुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥३०॥ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् । अमीमदन्त पितरो यथाभागमावृषायिषत ॥३१॥ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्मैतद्वः पितरो वासः ॥३२॥ आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषोऽसत् ॥ ३३ ॥ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् । स्वधा स्थ तर्पयत मे पितॄन् ॥ ३४ ॥

॥ इति द्वितीयोऽध्यायः ॥

——:o:——

# अथ तृतीयोऽध्यायः ॥

——:o:——

ऋषिः—आङ्गिरसः १ सुश्रुतः २ भारद्वाजः ३, १३ प्रजापतिः ४, ५, ६, १०, ४४, ४५ सार्पराज्ञी कद्रूः ६–८ गोतमः ११, ५१, ५२ विरूपः १२ देववातभरतौ १४ वामदेवः १५,

३६, ३७ आऽवत्सारः १६—१९ याज्ञवल्क्यः २०, २१ वैश्वामित्रो मधुच्छन्दाः २२—२४ सुबन्धुः २५, २६ श्रुतबन्धुः २७ प्रबन्धुः २८ मेधातिथिः २९ सत्यधृतिर्वारुणिः ३०—३३ मधुच्छन्दाः ३४ विश्वामित्रः ३५ आसुरिः ३८—४१ शंयुः ४२ शंयुर्बार्हस्पत्यः ४३ आगस्त्यः ४६, ४७ और्णवाभः ४८—५० बन्धुः ५३—५९ वसिष्ठः ६०, ६१ नारायणः ६२, ६३ ।

देवता—अग्निः १—४, ६—८, ११, १२, १४—१९, २२—२७, ३६, ३८—४०, ४७ अग्निवायुसूर्याः ५ अग्निसूर्यौ ९ अग्निः [क], सूर्यः [र] १० इन्द्राग्नी १३ आपः २० विश्वेदेवाः २१ बृहस्पतिः २८, २९ ब्रह्मणस्पतिः ३० आदित्यः ३१—३३ इन्द्रः ३४, ५०—५२ सविता ३५ प्रजापतिः ३७ वास्तुरग्निः ४१ वास्तुपतिरग्निः ४२ वास्तुपतिः ४३ मरुतः ४४,४५ इन्द्रमारुतौ ४६ यज्ञः ४८, ४९ मनः ५३—५५ सोमः ५६ रुद्रः ५७—६३ ।

छन्दः—गायत्री—१—४ , ६—८ , १६ , २३ , २९ ,४४ , ५६ दैवीबृहती [क], निचृद्बृहती [र] ५ पङ्क्तिः ९ गायत्री [क] , भुरिग्गायत्री [र] १० निचृद्गायत्री ११ , १२ , ३० , ३२ , ३५ , ३६ , ५५ स्वराट् त्रिष्टुप् १३ स्वराडनुष्टुप् १४ , ४५ भुरिक् त्रिष्टुप् १५ त्रिष्टुप् १७ निचृद्ब्राह्मी पङ्क्तिः १८ जगती १९ भुरिग् बृहती २० , २५ , ३९ उष्णिक् २१ , ६२ भुरिगासुरी गायत्री [क] गायत्री [र] २२ विराड्गायत्री २४ , २७ , २८ , ३१ , ३३ , ५४ , स्वराड् बृहती २६ पथ्या बृहती ३४ ब्राह्म्युष्णिक् ३७ , अनुष्टुप् ३८ , ४२ , ४९ निचृदनुष्टुप् ४० , ५७ आर्षीपङ्क्तिः ४१ भुरिग्जगती ४३ , ६३ भुरिक् पङ्क्तिः ४६ विराडनुष्टुप् ४७ ब्राह्म्यनुष्टुप् ४८ भुरिगनुष्टुप् ५० विराट् पङ्क्तिः ५१ , ५२ , ५८ अतिपादनिचृद्गायत्री ५३ स्वराड्गायत्री ५९ विराड्ब्राह्मी त्रिष्टुप् ६० भुरिगास्तारपङ्क्तिः ६१ ।

स्वरः—षड्जः १—४ , ६—८ , १०—१२ , १६ , २२—२४ , २७—३३ , ३५ , ३६ , ४४, ५३—५६ , ५९ मध्यमः ५ , २० , २५ , २६ , ३४ , ३९ पञ्चमः ९ , १८ , ४१, ४६ , ५१ , ५२ , ५८ , ६१ धैवतः १३ , १५ , १७ , ६० गान्धारः १४ , ३८ , ४० , ४२, ४५ , ४७—५० , ५७ निषादः १९, ४३, ६३ ऋषभः २१, ३७ , ६२ ॥

॥ ओ३म् ॥ स॒मि॒धा॒ग्निन्दु॑वस्यत घृ॒तैर्बो॑धय॒ताति॑थिम् । आस्मि॑न्ह॒व्या जु॑हो-

तन ॥ १ ॥ सुसमिद्धाय शोचिषे घृतन्तीव्रञ्जुहोतन । अग्नये जातवेदसे ॥ २ ॥ तन्त्वा समिद्भिरङ्गिरो घृतेन वर्द्धयामसि । बृहच्छोचायविष्ठ्य ॥ ३ ॥ उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत । जुषस्व समिधो मम ॥ ४ ॥ भूर्भुवः स्वः द्यौरिव भूम्ना पृथिवीव वरिम्णा । तस्यास्ते पृथिवि देवयजनि पृष्ठेऽग्निमन्नादमन्नाद्यायादधे ॥ ५ ॥ आयङ्गौः पृश्निरक्रमीदसदन् मातरम्पुरः । पितरञ्च प्रयन्त्स्वः ॥ ६ ॥ अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवम् ॥ ७ ॥ त्रिंशद्धाम विराजति वाक्पतङ्गाय धीयते । प्रति वस्तोरह द्युभिः ॥८॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा । अग्निर्वर्च्चो ज्योतिर्वर्च्चः स्वाहा सूर्यो वर्च्चो ज्योतिर्वर्च्चः स्वाहा । ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥ ९ ॥ सजूर्देवेन सवित्रा सजू रात्र्येन्द्रवत्या । जुषाणो अग्निर्वेतु स्वाहा । सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या । जुषाणः सूर्यो वेतु स्वाहा ॥ १० ॥ उपप्रयन्तोऽध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ॥ ११ ॥ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम् । अपाᳬं रेताᳬंसि जिन्वति ॥ १२ ॥ उभा वामिन्द्राग्नीऽआहुवध्याऽउभा राधसः सह मादयध्यै । उभा दाताराविषाᳬं रयीणामुभा वाजस्य सातये हुवे वाम् ॥ १३ ॥ अयन्ते योनिर्ऋत्वियो यतो जातोऽअरोचथाः । तञ्जानन्नग्नऽआरोहाथा नो वर्द्धया रयिम् ॥ १४ ॥ अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठोऽअध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विशे ॥ १५ ॥ अस्य प्रत्नामनु द्युतᳯं शुक्रन्दुदुह्रेऽअह्रयः । पयः सहस्रसामृषिम् ॥ १६ ॥ तनूपाऽअग्नेऽसि तन्वम्मे पाह्यायुर्दाऽअग्नेस्यायुर्मे देहि वर्च्चोदाऽअग्नेऽसि वर्च्चो मे देहि । अग्ने यन्मे तन्वाऽऊनन्तन्मऽआपृण ॥१७॥ इन्धानास्त्वा शतᳯं हिमा द्युमन्तᳯं समिधीमहि वयस्वन्तो वयस्कृतᳯं सहस्वन्तः सहस्कृतम् । अग्ने सपत्नदम्भनमदब्धासोऽदाभ्यम् । चित्रावसो स्वस्ति ते पारमशीय ॥ १८ ॥ सन्त्वमग्ने सूर्यस्य वर्च्चसागथाः समृषीणाᳬंस्तुतेन । सम्प्रियेण धाम्ना समहमायुषा संवर्च्चसा सम्प्रजया सᳯं रायस्पोषेण ग्मिषीय ॥ १९ ॥ अन्धस्थान्धो वो भक्षीय महस्थ महो वो भक्षीयोर्ज्जस्थोर्ज्जं वो भक्षीय रायस्पोषस्थ रायस्पोषं वो भक्षीय ॥ २० ॥ रेवती रमध्वमस्मिन्योनावस्मिन् गोष्ठेस्मिँल्लोकेस्मिन् क्षये । इहैव स्त मापगात ॥ २१ ॥ सᳯं हितासि विश्वरूप्यूर्जा मा विश गौपत्येन । उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि ॥ २२ ॥ राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्द्धमानᳬं स्वे दमे

॥ २३ ॥ स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥ २४ ॥ अग्ने त्वन्नोऽअन्तमऽउत त्राता शिवो भवा वरूथ्यः । वसुरग्निर्वसुश्रवाऽअच्छा नक्षि द्युमत्तमꣳ रयिन्दाः ॥ २५ ॥ तन्त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः । स नो बोधि श्रुधी हवमुरुष्याणोऽअघायतः समस्मात् ॥ २६ ॥ इड एह्यदितऽएहि काम्याऽएत । मयि वः कामधरणम्भूयात् ॥ २७ ॥ सोमानꣳ स्वरणङ्कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ॥ २८ ॥ यो रेवान्योऽअमीवहा वसुवित्पुष्टिवर्द्धनः । स नः सिषक्तु यस्तुरः ॥ २९ ॥ मा नः शꣳसोऽअररुषो धूर्तिः प्रणङ्मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥ ३० ॥ महि त्रीणामवोऽस्तु द्युक्षम्मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ॥ ३१ ॥ नहि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशꣳसः ॥ ३२ ॥ ते हि पुत्रासो अदितेः प्र जीवसे मर्त्याय । ज्योतिर्यच्छन्त्यजस्रम् ॥ ३३ ॥ कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन् भूयऽइन्नु ते दानं देवस्य पृच्यते ॥ ३४ ॥ तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ३५ ॥ परि ते दूडभो रथोऽस्माँ२॥ अश्नोतु विश्वतः । येन रक्षसि दाशुषः ॥३६॥ भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याꣳसुवीरो वीरैः सुपोषः पोषैः । नर्य प्रजाम्मे पाहि शꣳस्य पशून्मे पाह्यथर्य पितुम्मे पाहि ॥ ३७ ॥ आगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम् । अग्ने सम्राडभि द्युम्नमभि सह आ यच्छस्व ॥ ३८ ॥ अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः । अग्ने गृहपतेऽभि द्युम्नमभि सह आयच्छस्व ॥ ३९ ॥ अयमग्निः पुरीष्यो रयिमान् पुष्टिवर्द्धनः । अग्ने पुरीष्याभिद्युम्नमभि सहऽआ यच्छस्व ॥४०॥ गृहा मा बिभीत मा वेपध्वमूर्ज्जं बिभ्रत एमसि । ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ॥ ४१ ॥ येषामध्येति प्रवसन्येषु सौमनसो बहुः । गृहानुप ह्वयामहे ते नो जानन्तु जानतः ॥४२॥ उपहूताऽइह गावऽउपहूताऽअजावयः । अथोऽअन्नस्य कीलालऽउपहूतो गृहेषु नः । क्षेमाय वः शान्त्यै प्रपद्ये शिवꣳशग्मꣳशंयोः शंयोः ॥ ४३ ॥ प्रघासिनो हवामहे मरुतश्च रिशादसः । करम्भेण सजोषसः ॥ ४४ ॥ यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये । यदेनश्चकृमा वयमिदन्तदव यजामहे स्वाहा ॥ ४५ ॥ मोषूणऽइन्द्रात्र पृत्सु देवैरस्तिहि ष्मा ते शुष्मिन्नवयाः । महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीः ॥ ४६ ॥ अक्रन् कर्म कर्मकृतः सह वाचा मयोभुवः देवेभ्यः कर्म कृत्वास्तं प्रेत सचाभुवः ॥ ४७ ॥ अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । अव देवै-

देवकृतमेनोयासिषमव मर्त्यैर्मर्त्यकृतम्पुरुराव्णो देव रिषस्पाहि ॥ ४८ ॥ पूर्णा दर्वि परा पत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहा ऽइषमूर्जᳯं शतक्रतो ॥४९॥ देहि मे ददामि ते नि मे धेहि नि ते दधे । निहारं च हरासि मे निहारन्निहराणि ते स्वाहा ॥ ५० ॥ अक्षन्नमीमदन्त ह्यव प्रियाऽअधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी ॥ ५१ ॥ सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि । प्र नूनं पूर्णबन्धुर स्तुतो यासि वशाँ२॥ अनु योजान्विन्द्र ते हरी ॥ ५२ ॥ मनो न्वाह्वामहे नाराशᳯंसेन स्तोमेन । पितॄणां च मन्मभिः ॥ ५३ ॥ आ नऽएतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे ॥ ५४ ॥ पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातᳯं सचेमहि ॥ ५५ ॥ वयᳯं सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तः सचेमहि ॥ ५६ ॥ एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वाहा । एष ते रुद्र भाग आखुस्ते पशुः ॥ ५७ ॥ अव रुद्रमदीमह्यव देवन्त्र्यम्बकम् । यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥ ५८ ॥ भेषजमसि भेषजङ्गवेऽश्वाय पुरुषाय भेषजम् । सुखम्मेषाय मेष्यै ॥ ५९ ॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनं । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् । त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनं । उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः ॥ ६० ॥ एतत्ते रुद्रावसं तेन परो मूजवतोऽतीहि । अवततधन्वा पिनाकावसः कृत्तिवासा अहिᳯंसन्नः शिवोऽतीहि ॥ ६१ ॥ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषम् ॥ ६२ ॥ शिवो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिᳯंसीः । निवर्त्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय ॥ ६३ ॥

॥ इति तृतीयोऽध्यायः ॥

—:०:—

# अथ चतुर्थोऽध्यायः ॥

ऋषिः-प्रजापतिः १-७ आत्रेयः ८ आङ्गिरसः ९-१५ वत्सः १६-३६ गोतमः ३७ ।

देवता—अबौषध्यौ १ आप: २, १२, १३ मेघ: ३ परमात्मा ४, ५ यज्ञ: ६, १०, २४, २६, ३७ अग्न्यब्बृहस्पतय: ७ ईश्वर: ८ विद्वान् ९, २७ अग्नि: ११, १४—१७, २८, २९, ३२ वाग्विद्युत् १८-२३ सविता २५ वरुण: ३०, ३१ सूर्य्यविद्वांसौ ३३ यजमान: ३४ सूर्य्य: ३५, ३६ ।

छन्द:—विराड् ब्राह्मी जगती १ स्वराड् ब्राह्मी त्रिष्टुप् २ भुरिक् त्रिष्टुप् ३ निचृद्ब्राह्मी पङ्क्ति: ४ निचृदार्ष्यनुष्टुप् ५, ६, २९, ३२ पङ्क्ति: क आर्ची बृहती र ७ आर्ष्यनुष्टुप् ८ आर्षी पङ्क्ति: ९ निचृदार्षी जगती क साम्नी त्रिष्टुप् र १० स्वराड् ब्राह्म्यनुष्टुप् क आर्ष्युष्णिक् र ११ ब्राह्म्यनुष्टुप् १२ भुरिगार्षी पङ्क्ति: १३, १६ स्वराडार्ष्युष्णिक् १४ भुरिग्ब्राह्मी बृहती १५ आर्चीत्रिष्टुप् १७ स्वराडार्षीबृहती १८ भुरिग्ब्राह्मी पंक्ति: १९ साम्नी जगती क भुरिगार्ष्युष्णिक् र २० विराडार्षी बृहती २१ ब्राह्मी पंक्ति: २२ आस्तारपङ्क्ति: २३ ब्राह्मी जगती क याजुषी पङ्क्ति: र २४ विराड् ब्राह्मी जगती क निचृदार्षी गायत्री र २५ भुरिग्ब्राह्मी पंक्ति: २६, २७ साम्नीबृहती क साम्न्युष्णिक् र २८ स्वराड्याजुषी त्रिष्टुप् क , विराडार्षी त्रिष्टुप् र ३० स्वराडार्षी त्रिष्टुप् ३१ भुरिगार्षी पङ्क्ति: क ,याजुषी जगती र ३३ भुरिगार्षी गायत्री क , भुरिगार्ची बृहती र, विराडार्च्यनुष्टुप् उ ३४ निचृदार्षीजगती ३५ विराड् ब्राह्मी बृहती ३६ निचृदार्ची त्रिष्टुप् ३७ ।

स्वर:-निषाद: १, ३५ धैवत: २, ३, १७, ३०, ३१, ३७ पञ्चम: ४, ९, १३, १६, १९, २२, २३, २६, २७, गान्धार: ५, ६, ८, १२, २९, ३२, पञ्चम: क मध्यम: र ७ निषाद: क धैवत: र १० गान्धार: क ऋषभ: र ११ ऋषभ: १४ मध्यम: १५, १८, २१, ३६, निषाद: क ऋषभ: र २० निषाद: क पञ्चम: र २४ निषाद: क षड्ज: र २५ मध्यम: क ऋषभ: र २८ पञ्चम: क निषाद: र ३३ षड्ज: क मध्यम: र, गान्धार: उ ३४ ॥

॥ ओ३म् ॥ एदमगन्म देवयजनम्पृथिव्या यत्र देवासो अजुषन्त विश्वे । ऋक्सामाभ्या ँ सन्तरन्तो यजुर्भी रायस्पोषेण समिषा मदेम । इमा आपः शमु मे सन्तु देवी । ओषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः ॥ १ ॥ आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्वꣳ हि रिप्रम्प्रवहन्ति देवीः । उदिदाभ्यः शुचिरापूत एमि । दीक्षातपसोस्तनूरसि तान्त्वा शिवा ँ शग्माम्परि दधे भद्रं वर्णं पुष्यन् ॥ २ ॥ महीनाम्पयोऽसि वर्च्चोदा असि वर्च्चो मे देहि ।

वृत्रस्यासि कनीनकश्चक्षुर्दा असि चक्षुर्मे देहि ॥ ३ ॥ चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥४॥ आ वो देवास ईमहे वामम्प्रयत्यध्वरे । आ वो देवास आशिषो यज्ञियासो हवामहे ॥५॥ स्वाहा यज्ञम्मनसः स्वाहोरोरन्तरिक्षात् । स्वाहा द्यावापृथिवीभ्याᳬस्वाहा वातादारभे स्वाहा ॥ ६ ॥ आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा दीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहा । आपो देवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवी उरो अन्तरिक्ष बृहस्पतये हविषा विधेम स्वाहा ॥ ७ ॥ विश्वो देवस्य नेतुर्मर्त्तो वुरीत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा ॥ ८ ॥ ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातमास्य यज्ञस्योदृचः । शर्म्मासि शर्म्म मे यच्छ नमस्तेऽस्तु मा मा हिᳬसीः ॥ ९ ॥ ऊर्गस्याङ्गिरस्यूर्णम्म्रदा ऊर्जं मयि धेहि । सोमस्य नीविरसि विष्णोः शर्म्मासि शर्म यजमानस्येन्द्रस्य योनिरसि सुसस्याः कृषीस्कृधि । उच्छ्रयस्व वनस्पत ऊर्ध्वो मा पाह्यᳬहस आस्य यज्ञस्योदृचः ॥ १० ॥ व्रतं कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्य्यज्ञियः । दैवीन्धियम्मनामहे सुमृडीकामभिष्टये वर्च्चोधां यज्ञवाहसᳬ सुतीर्था नो असद्वशे । ये देवा मनोजाता मनोयुजो दक्ष क्रतवस्तेनोऽवन्तु ते नः पान्तु तेभ्यः स्वाहा ॥११॥ श्वात्राः पीता भवत यूयमापो अस्माकमन्तरुदरे सुशेवाः । ता अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृधः ॥ १२ ॥ इयं ते यज्ञिया तनूरपो मुञ्चामि न प्रजाम् । अᳬहोमुचः स्वाहाकृताः पृथिवीमाविशत पृथिव्या सम्भव ॥१३॥ अग्ने त्वᳬसु जागृहि वयᳬसु मन्दिषीमहि । रक्षाणो अप्रयुच्छन् प्रबुधे नः पुनस्कृधि ॥ १४ ॥ पुनर्मनः पुनरायुर्म आगन् पुनः प्राणः पुनरात्मा म आगन् पुनश्चक्षुः पुनः श्रोत्रम्म आगन् । वैश्वानरोऽदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यात् ॥ १५ ॥ त्वमग्ने व्रतपा असि देव आमर्त्येष्वा । त्वं यज्ञेष्वीड्यो रास्वेयत्सोमाभूयो भर देवो नः सविता वसोर्दाता वस्वदात् ॥१६॥ एषा ते शुक्र तनूरेतद्वर्चस्तया सम्भव भ्राजङ्गच्छ । जूरसि धृता मनसा जुष्टा विष्णवे ॥ १७ ॥ तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा । शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसि ॥ १८ ॥ चिदसि मनासि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदितिरस्युभयतः शीर्ष्णी । सा नः सुप्राची सुप्रतीच्येधि मित्रस्त्वा पदि वध्नीतां पूषाऽध्वनस्पात्विन्द्रायाध्यक्षाय ॥ १९ ॥ अनु त्वा माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । सा देवि देवमच्छेही-

न्द्राय सोमꣳ रुद्रस्त्वा वर्त्तयतु स्वस्ति सोमसखा पुनरेहि ॥ २० ॥ वस्व्यस्यदि-
तिरस्यादित्यासि रुद्रासि चन्द्रासि । बृहस्पतिष्ट्वा सुम्ने रम्णातु रुद्रो वसुभिराचके
॥ २१ ॥ अदित्यास्त्वा मूर्द्धन्नाजिघर्म्मि देवयजने पृथिव्या इडायास्पदमसि घृतवत्
स्वाहा । अस्मे रमस्वास्मे ते बन्धुस्त्वे रायो मे रायो मा वयꣳ रायस्पोषेण वि
यौष्म तोतो रायः ॥ २२ ॥ समख्ये देव्या धिया सन्दक्षिणयोरुचक्षसा । मा
म आयुः प्र मोषीर्मो अहन्तव वीरं विदेय तव देवि संदृशि ॥ २३ ॥ [क] एष ते
गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष
ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोनामानाꣳ साम्राज्यङ्गच्छेति मे सोमाय
ब्रूतात् । [र] आस्माकोऽसि शुक्रस्ते ग्रह्यो विचितस्त्वा वि चिन्वन्तु ॥ २४ ॥ [क]
अभि त्यं देवꣳ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳ रत्नधामभि प्रियं
मतिं कविम् । ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत । [र]
सुक्रतुः कृपा स्वः प्रजाभ्यस्त्वा प्रजास्त्वाऽनुप्राणन्तु प्रजास्त्वमनुप्राणिहि ॥ २५ ॥
शुक्रं त्वा शुक्रेण क्रीणामि चन्द्रञ्चन्द्रेणामृतममृतेन । सग्मे ते गोरस्मे ते चन्द्राणि
तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे सहस्रपोषं पुषेयम् ॥ २६ ॥
मित्रो न एहि सुमित्रध इन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनम् ।
स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्रक्षध्व-
म्मा वो दभन् ॥ २७ ॥ [क] परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भज । [र] उदा-
युषा स्वायुषोदस्थाममृताँ २ अनु ॥ २८ ॥ प्रति पन्थामपद्महि स्वस्तिगामनेहसम् ।
येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥ २९ ॥ [क] अदित्यास्त्वगस्यदित्यै
सद आसीद । अस्तभ्नाद्द्यां वृषभोऽअन्तरिक्षममिमीत वरिमाणम्पृथिव्याः ।
आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि ॥ ३० ॥ वनेषु व्यु-
न्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु । हृत्सु क्रतुं वरुणो विक्ष्वग्निन्दिवि
सूर्य्यमदधात् सोममद्रौ ॥ ३१ ॥ सूर्य्यस्य चक्षुरारोहाग्नेरक्ष्णः कनीनकम् । यत्रै-
तशेभिरीयसे भ्राजमानो विपश्चिता ॥ ३२ ॥ [क] उस्रावेतं धूर्षाहौ युज्येथामन-
श्रू अवीरहणौ ब्रह्मचोदनौ । [र] स्वस्ति यजमानस्य गृहान् गच्छतम् ॥ ३३ ॥ [क]
भद्रो मेऽसि प्रच्यवस्व भुवस्पते विश्वान्यभि धामानि । [र] मा त्वा परिपरिणो वि-
दन् मा त्वा परिपन्थिनो विदन् मा त्वा वृका अघायवो विदन् । [उ] श्येनो भूत्वा
परापत यजमानस्य गृहान् गच्छतन्नौ सꣳस्कृतम् ॥ ३४ ॥ नमो मित्रस्य वरु-
णस्य चक्षसे महो देवाय तदृतꣳ सपर्यत । दूरेदृशे देवजाताय केतवे दिवस्पुत्राय

सूर्य्याय शꣳसत ॥ ३५ ॥ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद ॥ ३६ ॥ याते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोमदुर्य्यान् ॥ ३७ ॥

॥ इति चतुर्थोऽध्यायः ॥

——:०:——

# ॥ अथ पञ्चमोऽध्यायः ॥

ऋषिः–गोतमः १–१४ मेधातिथिः १५ वसिष्ठः १६, १७ औतथ्यो दीर्घतमा १८–२९ मधुच्छन्दाः ३०–३५ आगस्त्यः ३६–४३ ।

देवता–विष्णुः १, १५–२१, ३८, ४१ विष्णुर्यज्ञः २ यज्ञः ३, १३, २२, २३, २५–२८, ४३ अग्निः ४, ६, ८, ९, ३१–३७, ४०, ४२ विद्युत् ५ सोमः ७ वाक् १०–१२ सविता १४ सूर्य्यविद्वांसौ २४ ईश्वरसभाध्यक्षौ २९, ३० सोमसवितारौ ३९ ।

छन्दः–स्वराड् ब्राह्मीबृहती १ आर्षीगायत्री[क] , आर्चीत्रिष्टुप्[र] २ आर्षी पङ्क्तिः ३ आर्षीत्रिष्टुप् ४ आर्ष्युष्णिक्[क] भुरिगार्षी पङ्क्तिः[र] ५ विराड् ब्राह्मी पंक्तिः ६ आर्षी बृहती[क] आर्षी जगती[र] ७ विराडार्षी बृहती[क] निचृदार्षी बृहती[र] ८ भुरिगार्षीगायत्री[१] भुरिग्ब्राह्मी बृहती[२] निचृद्ब्राह्मी[३] जगती याजुष्यनुष्टुप्[४] ९ ब्राह्मयुष्णिक् १० निचृद्ब्राह्मी त्रिष्टुप् ११ भुरिग् ब्राह्मी पङ्क्तिः १२ भूरिगार्ष्यनुष्टुप् १३, २४ स्वराडार्षी जगती १४ भुरिगार्षी गायत्री १५ स्वराडार्षी त्रिष्टुप् १६, १८ स्वराड्ब्राह्मी त्रिष्टुप् १७ निचृदार्षी जगती १९ विराडार्षी त्रिष्टुप् २० भुरिगार्षी पंक्तिः २१ साम्नी पंक्तिः[क] भुरिगार्षी बृहती[र] २२ आयुषी बृहती[३] स्वराड्ब्राह्म्यनुष्टुप्[१७] स्वराड् ब्राह्मयुष्णिक्[र] २३ ब्राह्मी बृहती[क] आर्षीपंक्तिः[र] २५ निचृदार्षी पंक्तिः[क] निचृदार्षीत्रिष्टुप्[र] २६ ब्राह्मी जगती २७ आर्षी-

जगती २८ अनुष्टुप् २९ आर्च्युष्णिक् ३० विराडार्ष्यनुष्टुप् ३१ स्वराड्ब्राह्मी त्रिष्टुप् ३२ ब्राह्मी पंक्तिः ३३ स्वराड् ब्राह्मी बृहती ३४ निचृद्ब्राह्मी पङ्क्तिः ३५ निचृदार्ची त्रिष्टुप् ३६ आर्षी त्रिष्टुप् ३७ भुरिगार्ष्यनुष्टुप् ३८ साम्नी बृहती क आर्षी पङ्क्तिः ३९ निचृद्-ब्राह्मी त्रिष्टुप् ४० भुरिगार्ष्यनुष्टुप् ४१ स्वराड्ब्राह्मी त्रिष्टुप् ४२ ब्राह्मी त्रिष्टुप् ४३ ।

स्वरः-मध्यमः १, ८, ३४, ३९, षड्जः क धैवतः र २ पञ्चमः ३, ६, १२, २१, ३३, ३५, धैवतः ४, ११, १६-१८, २०, ३२, ३६, ३७, ४२, ४३, ऋषभः क , पञ्चमः र ५ मध्यमः क निषादः र ७ षड्जः [१] मध्यमः [२] गान्धारः [३] निषादः [४] ९ ऋषभः १०, ३० गान्धारः १३, २४, २९, ३१, ३८, ४०, ४१, निषादः १४, १९, २७, २८, षड्जः १५ पञ्चमः क , मध्यमः र २२ मध्यमः अ , गान्धारः व , ऋषभः र २३ मध्यमः क पञ्चमः र २५ पञ्चमः क धैवतः र २६ ॥

॥ ओ३म् ॥ अग्नेस्तनूरसि विष्णवे त्वा सोमस्य तनूरसि विष्णवे त्वाऽतिथे-रातिथ्यमसि विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे त्वाऽग्नये त्वा रायस्पो-षदे विष्णवे त्वा ॥ १ ॥ क अग्नेर्जनित्रमसि वृषणौ स्थ उर्वश्यस्यायुरसि पुरूरवा-असि र गायत्रेण त्वा छन्दसा मन्थामि त्रैष्टुभेन त्वा छन्दसा मन्थामि जागतेन त्वा छन्दसा मन्थामि ॥ २ ॥ भवतन्नः समनसौ सचेतसावरेपसौ मा यज्ञꣳहिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः ॥ ३ ॥ अग्नावग्निश्चरति प्रविष्टऽऋषीणाम्पुत्रो अभिशस्तिपावा । स नः स्योनः सुयजा यजेह देवेभ्यो हव्यꣳसदमप्रयुच्छन् स्वाहा ॥ ४ ॥ क आपतये त्वा परिपतये गृह्णामि तनूनप्त्रे शाक्वराय शक्वनऽओजिष्ठाय अनाधृष्टमस्यनाधृष्यं देवानामोजोऽनभिशस्त्यभिश-स्तिपाऽअनभिशस्तेन्यमञ्जसा सत्यमुपगेषꣳ स्विते मा धाः ॥ ५ ॥ अग्ने व्रत-पास्त्वे व्रतपा या तव तनूरियꣳ सा मयि यो मम तनूरेषा सा त्वयि । सह नौ व्रतपते व्रतान्यनु मे दीक्षान्दीक्षापतिर्मन्यतामनु तपस्तपस्पतिः ॥ ६ ॥ क अꣳशुरꣳशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविदे । आतुभ्यमिन्द्रः प्यायतामात्वमि-न्द्राय प्यायस्व । र आप्याययास्मान्त्सखीन्त्सन्न्या मेधया स्वस्ति ते देव सोम सुत्यामशीय । एष्टा रायः प्रेषे भगायऽऋतमृतवादिभ्यो नमो द्यावापृथिवीभ्याम् ॥ ७ ॥ क या तेऽअग्नेऽयः शया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचोऽअपावधीत्त्वेषं वचोऽअपावधीत् स्वाहा । र या तेऽअग्ने रजः शया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचोऽ-

अपावधीत्त्वेषं वचोऽअपावधीत् स्वाहा । या तेऽअग्ने हरिशया तनूर्वर्षिष्ठा ग-ह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचोअपावधीत् स्वाहा ॥ ८ ॥ [1]तप्तायनी मेऽसि वित्तायनी मे स्यवतान्मा नाथितादवतान्मा व्यथितात् । [2] विदेदग्निर्नभोनामाग्नेऽअङ्गिर आयुना नाम्नेहि योऽस्यां पृथिव्यामसि यत्तेनाधृष्टन्नाम यज्ञियं तेन त्वा दधे विदेदग्निर्नभोनामाग्ने अङ्गिर आयुना [3] नाम्नेहि यो द्वितीयस्याम्पृथिव्यामसि यत्तेऽनाधृष्टन्नाम यज्ञियन्तेन त्वा दधे विदेदग्निर्नभोनामाग्नेऽअङ्गिर आयुना नाम्नेहि यस्तृतीयस्याम्पृथिव्यामसि यत्तेनाधृष्टन्नाम यज्ञियन्तेन त्वा दधे । [4] अनु त्वा देववीतये ॥ ९ ॥ सिꣳह्यसि सपत्नसाही देवेभ्यः कल्पस्व सिꣳह्यसि सपत्नसाही देवेभ्यः । शुन्धस्व सिꣳह्यसि सपत्नसाही देवेभ्यः शुम्भस्व ॥ १० ॥ इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु प्रचेतास्त्वा रुद्रैः पश्चात्पातु मनोजवास्त्वा पितृभिर्दक्षिणतः पातु विश्वकर्मा त्वादित्यैरुत्तरतः पात्विदमहन्तप्तं वार्बहिर्द्धा यज्ञान्निःसृजामि ॥ ११ ॥ सिꣳह्यसि स्वाहा सिꣳह्यस्यादित्यवनिः स्वाहा सिꣳह्यसि ब्रह्मवनिः क्षत्रवनिः स्वाहा सिꣳह्यसि सुप्रजावनीरायस्पोषवनिः स्वाहा सिꣳह्यस्यावह देवान्यजमानाय स्वाहा भूतेभ्यस्त्वा ॥ १२ ॥ ध्रुवोऽसि पृथिवीन्दृꣳह ध्रुवक्षिदस्यन्तरिक्षन्दृꣳहाच्युतक्षिदसि दिवन्दृꣳहाग्नेः पुरीषमसि ॥ १३ ॥ युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । विहोत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहा ॥ १४ ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहा ॥ १५ ॥ इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे दशस्या । व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा ॥ १६ ॥ देवश्रुतौ देवेष्वाघोषतम्प्राची प्रेतमध्वरङ्कल्पयन्तीऽऊर्ध्वं यज्ञन्नयतम्मा जिह्वरतम् । स्वं गोष्ठमवदतन्देवी दुर्य्येऽआयुर्मा निर्वादिष्टम्प्रजाम्मा निर्वादिष्टमत्र रमेथां वर्ष्मन् पृथिव्याः ॥ १७ ॥ विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाꣳसि । यो अस्कभायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा ॥१८॥ दिवो वा विष्ण उत वा पृथिव्या महो वा विष्ण उरोरन्तरिक्षात् । उभा हि हस्ता वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्याद्विष्णवे त्वा ॥ १९ ॥ प्र तद्विष्णुस्तवते वीर्य्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ २० ॥ विष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि । वैष्णवमसि विष्णवे त्वा ॥ २१ ॥ [5] देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ता-

भ्याम् । आददे नार्यसीदमहꣳ रक्षसां ग्रीवा अपिकृन्तामि । बृहन्नसि बृहद्रवा बृहतीमिन्द्राय वाचं वद ॥ २२ ॥ रक्षोहणं वलगहनं वैष्णवीमिदमहन्तं वलगमुत्किरामि यम्मे निष्ट्यो यममात्यो निचखानेदमहन्तं वलगमुत्किरामि यम्मे समानो यमसमानो निचखानेदमहन्तं वलगमुत्किरामि यम्मे सबन्धुर्यमसबन्धुर्निचखानेदमहन्तं वलगमुत्किरामि यम्मे सजातो यमसजातो निचखानोत्कृत्याङ्किरामि ॥ २३ ॥ स्वराडसि सपत्नहा सत्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्वराडस्यमित्रहा॥२४॥ रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान्रक्षोहणो वो वलगहनोऽव नयामि वैष्णवान्रक्षोहणो वो वलगहनोऽवस्तृणामि वैष्णवान्रक्षोहणौ वां वलगहना उपदधामि वैष्णवी रक्षोहणौ वां वलगहना पर्यूहामि वैष्णवी वैष्णवमसि वैष्णवा स्थ ॥ २५ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् । आददे नार्यसीदमहꣳ रक्षसाङ्ग्रीवा अपिकृन्तामि यवोऽसि यवयास्मद्द्वेषो यवयारातीर्दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि ॥ २६ ॥ उद्दिवꣳ स्तभानान्तरिक्षं पृण दृꣳहस्व पृथिव्यां द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणौ ध्रुवेण धर्मणा । ब्रह्मवनिं त्वा क्षत्रवनिं रायस्पोषवनि पर्यूहामि । ब्रह्म दृꣳह क्षत्रं दृꣳह आयुर्दृꣳह प्रजान्दृꣳह ॥ २७ ॥ ध्रुवासि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया पशुभिर्भूयात् । घृतेन द्यावापृथिवी पूर्येथामिन्द्रस्य छदिरसि विश्वजनस्य छाया ॥ २८ ॥ परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः । वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः ॥२९॥ इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवोऽसि ऐन्द्रमसि वैश्वदेवमसि ॥ ३० ॥ विभूरसि प्रवाहणो वह्निरसि हव्यवाहनः । श्वात्रोऽसि प्रचेतास्तुथोऽसि विश्ववेदाः ॥ ३१ ॥ उशिगसि कविरङ्घारिरसि बम्भारिरवस्यूरसि दुवस्वाञ्छुन्ध्यूरसि मार्जालीयः । सम्राडसि कृशानुः परिषद्योऽसि पवमानो नभोऽसि प्रतक्वा मृष्टोऽसि हव्यसूदन ऋतधामासि स्वर्ज्योतिः ॥ ३२ ॥ समुद्रोऽसि विश्वव्यचा अजोऽस्येकपादहिरसि बुध्न्यो वागस्यैन्द्रमसि सदोस्यृतस्य द्वारौ मा मासन्तासमध्वनामध्वपते प्र मा तिर स्वस्ति मेऽस्मिन् पथि देवयाने भूयात् ॥ ३३ ॥ मित्रस्य मा चक्षुषेक्षध्वमग्नयः सगराः सगरास्थ सगरेण नाम्ना रौद्रेणानीकेन पातमाग्नयः पिपृत माग्नयो गोपायत मा नमो वोऽस्तु मा मा हिꣳसिष्ट ॥ ३४ ॥ ज्योतिरसि विश्वरूपं विश्वेषान्देवानाꣳ समित् त्वꣳ सोमतनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ स्वाहा । जुषाणो अप्तुराज्यस्य वेतु स्वाहा ॥ ३५ ॥ अग्ने नय सुपथा

राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्युस्मज्जुहुराणमेनो भूयिष्ठान्ते नमऽउक्तिं विधेम ॥ ३६ ॥ अयन्नो अग्निर्वरिवस्कृणोत्वयं मृधः पुरऽएतु प्रभिन्दन् । अयं वाजाञ्जयतु वाजसातावयꣳ शत्रूञ्जयतु जर्हृषाणः स्वाहा ॥ ३७ ॥ उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिन्तिर स्वाहा ॥ ३८ ॥ देवसवितरेष ते सोमस्तꣳ रक्षस्व मा त्वा दभन् । एतत्त्वं देव सोम देवो देवाँ२॥ उपागा इदमहम्मनुष्यान्त्सह रायस्पोषेण स्वाहा निर्वरुणस्य पाशान्मुच्ये ॥ ३९ ॥ अग्ने व्रतपास्ते व्रतपा या तव तनूर्मय्यभूदेषा सा त्वयि यो मम तनूस्त्वय्यभूदियꣳ सा मयि । यथायथन्नौ व्रतपते व्रतान्यनु मे दीक्षान्दीक्षापतिरमꣳस्तानु तपस्तपस्पतिः ॥ ४० ॥ उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतङ्घृतयोने पिब प्रप्र यज्ञपतिन्तिर स्वाहा ॥ ४१ ॥ अत्यन्याँ२॥ अगान्नान्याँ२॥ उपागामर्वाक्त्वा परेभ्योऽविदम्परोऽवरेभ्यः । तं त्वा जुषामहे देव वनस्पते देवयज्यायै देवास्त्वा देवयज्यायै जुषन्तां विष्णवे त्वा । ओषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः ॥ ४२ ॥ द्याम्मा लेखीरन्तरिक्षम्मा हिꣳसीः पृथिव्या सम्भव । अयꣳ हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय । अतस्त्वन्देव वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयꣳ रुहेम ॥ ४३ ॥

॥ इति पञ्चमोऽध्यायः ॥

---

## ॥ अथ षष्ठोऽध्यायः ॥

---

ऋषिः—आगस्त्यः १ शाकल्यः २ दीर्घतमा ३, ६, ८, ९, १७,—२१ मेधातिथिः ४, ५, ७, १०–१६, २२–२८ मधुच्छन्दाः २६–३५ गौतमः ३७ ।

देवता—सविता १, २, ३० विष्णुः ३, ४, ५ विद्वांसः ६, १२, १४, १५ त्वष्टा ७, २० बृहस्पतिः ८ सविता, अश्विनौ, पूषा ९ आपः १०, १३, १७, २७ वातः ११ द्यावा-

पृथिव्यौ १६,३५ अग्निः १८,२६ विश्वेदेवाः १६ सेनापतिः २१ वरुणः २२ अब्,यज्ञ,सूर्याः २३ सोमः २५, ३३ प्रजा २८ प्रजासभ्यराजानः ३१ सभापतीराजा ३२ यज्ञः ३४ इन्द्रः ३७।

छन्दः-पङ्क्तिः[उ] आसुरी[क] भुरिगाष्युंष्णिक्[र] १ निचृद्गायत्री[क] स्वराट् पङ्क्तिः[र] २ आयुंष्णिक्[उ] साम्न्युष्णिक्[क] निचृत्प्राजापत्या बृहती[र] ३ निचृदार्षी गायत्री ४, ५ आष्युंष्णिक्[क] भुरिक् साम्नी बृहती[र] ६ आर्षी बृहती ७ प्रजापत्यानुष्टुप्[क] निचृत् प्रजापत्या बृहती[र] ८ प्रजापत्या बृहती[क] पंक्तिः[र] ९ प्रजापत्या बृहती[क] निचृदार्षी बृहती[र] १० भुरिगाष्युंष्णिक् ११ भुरिक् प्रजापत्यानुष्टुप् १२ निचृदार्ष्यनुष्टुप् १३, २३ भुरिगार्षी जगती १४ निचृदार्षी त्रिष्टुप् १५, २७, २८, ब्राह्म्युष्णिक् १६ निचृद्ब्राह्म्यनुष्टुप् १७ प्रजापत्यानुष्टुप्[क] पङ्क्तिः[र] १८ ब्राह्म्यनुष्टुप् १९, २० याजुष्यउष्णिक् २१ ब्राह्मीस्वराडुष्णिक्[क] विराड् गायत्री[र] २२ आर्षी त्रिष्टुप्[क] त्रिपाद्गायत्री २४ आर्षीविराडनुष्टुप् २५ गायत्री[क] आर्षी त्रिष्टुप्[र] २६ भुरिगार्षी गायत्री[र] २९ स्वराडार्षी पङ्क्तिः ३० उष्णिक् ३१ पञ्चपाज्ज्योतिष्मती जगती ३२ भुरिगार्षी बृहती ३३ स्वराडार्षी पथ्याबृहती ३४ भुरिगार्ष्यनुष्टुप् ३५, ३७।

स्वरः—धैवतः[उ] ऋषभः[क], [र] १ षड्जः[क] धैवतः[र] २ ऋषभः[उ], [क], मध्यमः[र] ३ षड्जः ४, ५, २९ ऋषभः[क] मध्यमः[र] ६ मध्यमः ७, १०, ३३, ३४ ऋषभः[क], मध्यमः[र] ८ मध्यमः[क] धैवतः[र] ९ ऋषभः ११, १६, २१, ३१ गान्धारः १२, १३, १७, १९, २३, २५, २८, ३५, ३७ निषादः १४, ३२ पञ्चमः १५, ३० गान्धारः[क] पञ्चमः[र] १८ धैवतः २०, २७ ऋषभः[क] पञ्चमः[र] २२ धैवतः[क] षड्जः[र] २४ षड्जः[क] धैवतः[र] २६।

॥ ओ३म् ॥ [उ] देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्यामाददे नार्यसीदमहꣳ रक्षसाङ्ग्रीवा अपि कृन्तामि । [क] यवोऽसि यवयास्मद् द्वेषो यवयारातीर्[र] दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि ॥ १ ॥ [क] अग्रेणीरसि स्वावेशऽउन्नेतॄणामेतस्य वित्तादधि त्वा स्थास्यति[र] देवस्त्वा सविता मध्वानक्तु सुपिप्पलाभ्यस्त्वौषधीभ्यः । द्यामग्रेणास्पृक्ष आन्तरिक्षम्मध्येनाप्राः पृथिवीमुपरेणादृꣳहीः ॥ २ ॥ [उ] या ते धामान्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । [क] अत्राह तदुरुगायस्य विष्णोः परमम्पदमव भारि भूरि । [र] ब्रह्मवनिं त्वा क्षत्रवनिं रायस्पोषवनिं पर्यू-

हामि ब्रह्म दृꣳह क्षत्रन्दृꣳहायुर्दृꣳह प्रजान्दृꣳह ॥ ३ ॥ विष्णोः कर्म्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ ४ ॥ तद्विष्णोः परमम्पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ ५ ॥ [क] परिवीरसि परि त्वा दैवीर्विशो व्ययन्ताम्परीमं यजमानꣳ रायो मनुष्याणाम् । [र] दिवः सूनुरस्येष ते पृथिव्याँल्लोक आरण्यस्ते पशुः ॥ ६ ॥ उपावीरस्युप देवान्दैवीर्विशः प्रागुरुशिजो वह्नितमान् । देव त्वष्टर्वसु रम हव्या ते स्वदन्ताम् ॥ ७ ॥ [क] रेवती रमध्वम्बृहस्पते धारया वसूनि । [र] ऋतस्य त्वा देवहविः पाशेन प्रति मुञ्चामि धर्षा मानुषः ॥ ८ ॥ [क] देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् । [र] अग्नीषोमाभ्याञ्जुष्टन्नियुनज्मि । अद्भ्यस्त्वौषधीभ्योऽनुन्त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । अग्नीषोमाभ्यान्त्वा जुष्टम्प्रोक्षामि ॥ ९ ॥ [क] अपाम्पेरुरस्यापो देवीः स्वदन्तु स्वात्तञ्चित्सद्देवहविः । [र] सन्ते प्राणो वातेन गच्छताꣳ समङ्गानि यजत्रैः सम्यज्ञपतिराशिषा ॥ १० ॥ घृतेनाक्तौ पशूँस्त्रायेथाꣳ रेवति यजमाने प्रियन्धा आविश । उरोरन्तरिक्षात्सजूर्देवेन वातेनास्य हविषस्त्मना यज समस्य तन्वा भव । वर्षो वर्षीयसि यज्ञे यज्ञपतिन्धाः स्वाहा देवेभ्यो देवेभ्यः स्वाहा ॥ ११ ॥ माहिर्भूर्मा पृदाकुर्नमस्त आतानानर्वा प्रेहि । घृतस्य कुल्या उप ऋतस्य पथ्या अनु ॥१२॥ देवीरापः शुद्धा वोढ्वꣳ सुपरिविष्टा देवेषु सुपरिविष्टा वयम्परिवेष्टारो भूयास्म ॥१३॥ वाचं ते शुन्धामि प्राणन्ते शुन्धामि चक्षुस्ते शुन्धामि श्रोत्रन्ते शुन्धामि नाभिन्ते शुन्धामि मेढ्रन्ते शुंधामि पायुन्ते शुन्धामि चरित्राँस्ते शुन्धामि ॥१४॥ मनस्त आप्यायतां वाक्त आप्यायताम्प्राणस्त आप्यायताञ्चक्षुस्त आप्यायताꣳ श्रोत्रन्त आप्यायताम् । यत्ते क्रूरं यदास्थितं तत्त आप्यायतान्निष्ट्यायतान्तत्ते शुध्यतु शमहोभ्यः । ओषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः ॥ १५ ॥ रक्षसाम्भागोऽसि निरस्तꣳ रक्ष इदमहꣳ रक्षोऽभितिष्ठामीदमहꣳ रक्षोऽवबाध इदमहꣳ रक्षोऽधमन्तमो नयामि । घृतेन द्यावापृथिवी प्रोर्णुवाथां वायो वे स्तोकानामग्निराज्यस्य वेतु स्वाहा स्वाहाकृतेऽऊर्ध्वनभसम्मारुतङ्गच्छतम् ॥ १६ ॥ इदमापः प्रवहतावद्यञ्च मलञ्च यत् । यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणम् । आपो मा तस्मादेनसः पवमानश्च मुञ्चतु ॥ १७ ॥ [क] सन्ते मनो मनसा सम्प्राणः प्राणेन गच्छताम् । [र] रेडस्यग्निष्ट्वा श्रीणात्वापस्त्वा समरिणन्वातस्य त्वा ध्राज्यै पूष्णो रꣳह्याऽऊष्मणो व्यथिषत्प्रयुतन्द्वेषः ॥ १८ ॥ घृतङ्घृतपावानः पिबत वसां वसापावानः पिबतान्तरि-

वस्य हविरसि स्वाहा। दिशः प्रदिशऽआदिशो विदिशः उद्दिशो दिग्भ्यः स्वाहा ॥ १६ ॥ ऐन्द्रः प्राणोऽअङ्गेऽअङ्गे निदीध्यदैन्द्रऽउदानोऽअङ्गेऽअङ्गेऽनिधीत । देव त्वष्टर्भूरि ते सᳬसमेतु सलक्ष्मा यद्विषुरूपम्भवाति । देवत्रा यन्तमवसे सखायोऽनु त्वा मातापितरो मदन्तु ॥ २० ॥ समुद्रङ्गच्छ स्वाहाऽन्तरिक्षङ्गच्छ स्वाहा देवᳬ सवितारङ्गच्छ स्वाहा । मित्रावरुणौ गच्छ स्वाहाऽहोरात्रे गच्छ स्वाहा छन्दाᳬसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा यज्ञं गच्छ स्वाहा सोमं गच्छ स्वाहा दिव्यन्नभो गच्छ स्वाहाग्निं वैश्वानरङ्गच्छ स्वाहा मनो मे हार्दि यच्छ दिवन्ते धूमो गच्छतु स्वज्ज्योतिः पृथिवीम्भस्मना पृण स्वाहा ॥ २१ ॥ [क] मापो मौषधीर्हिᳬसीर्द्धाम्नो धाम्नो राजँस्ततो वरुण नो मुञ्च । यदाहुरघ्न्याऽइति वरुणेति शपामहे ततो वरुण नो मुञ्च । [र] सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः ॥ २२ ॥ हविष्मतीरिमा आपो हविष्माँ२॥ आविवासति । हविष्मान्देवो अध्वरो हविष्माँ२॥ अस्तु सूर्यः ॥ २३ ॥ [क] अग्नेर्वोऽपन्नगृहस्य सदसि सादयामीन्द्राग्न्योर्भागधेयी स्थ मित्रावरुणयोर्भागधेयी स्थ विश्वेषां देवानां भागधेयी स्थ [र] । अमूर्या उप सूर्ये याभिर्वा सूर्यः सह ता नो हिन्वन्त्वध्वरम् ॥ २४ ॥ हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा । ऊर्ध्वमिममध्वरं दिवि देवेषु होत्रा यच्छ ॥ २५ ॥ [क] सोम राजन्विश्वास्त्वम्प्रजा उपावरोह विश्वास्त्वाम्प्रजा उपावरोहन्तु । [र] शृणोत्वग्निः समिधा हवम्मे शृण्वन्त्वापो धिषणाश्च देवीः । श्रोता ग्रावाणो विदुषो न यज्ञᳬ शृणोतु देवः सविता हवम्मे स्वाहा ॥ २६ ॥ देवीरापो अपान्नपाद्यो वऊर्म्मिर्हविष्यऽइन्द्रियावान् मदिन्तमः । तं देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो येषाम्भागस्थ स्वाहा ॥ २७ ॥ कार्षिरसि समुद्रस्य त्वा क्षित्या उन्नयामि । समापो अद्भिरग्मत समोषधीभिरोषधीः ॥ २८ ॥ यमग्ने पृत्सु मर्त्यमवा वाजेषु यञ्जुनाः । स यन्ता शश्वतीरिषः स्वाहा ॥ २९ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् । आददे रावासि गभीरमिममध्वरङ्कृधीन्द्राय सुषूतमम् । उत्तमेन पविनोर्ज्जस्वन्तम्मधुमन्तम्पयस्वन्तन्निग्राभ्या स्थ देवश्रुतस्तर्प्पयत मा ॥३०॥ मनो मे तर्प्पयत वाचम्मे तर्प्पयत प्राणम्मे तर्प्पयत चक्षुर्मे तर्प्पयत श्रोत्रम्मे तर्प्पयतात्मानम्मे तर्प्पयत प्रजाम्मे तर्प्पयत पशून्मे तर्प्पयत गणान्मे तर्प्पयत गणा मे मा वितृषन् ॥ ३१ ॥ इन्द्राय त्वा वसुमते रुद्रवतऽइन्द्राय त्वादित्यवत इन्द्राय त्वाभिमातिघ्ने । श्येनाय त्वा सोमभृतेऽग्नये त्वा रायस्पोषदे ॥ ३२ ॥ यत्ते सोम

दिविज्ज्योतिर्य्यत्पृथिव्यां यदुरावन्तरिक्षे । तेनास्मै यजमानायोरुराये कृद्ध्यधिदात्रे वोचः ॥ ३३ ॥ श्वात्राः स्थ वृत्रतुरो राधोगूर्त्ताऽअमृतस्य पत्नीः । ता देवीर्देवत्रेमं यज्ञन्नयतोपहूताः सोमस्य पिबत ॥ ३४ ॥ माभेर्मा संविक्थाऽऊर्जन्धत्स्व धिषणे वीड्वी सती वीडयेथामूर्जन्दधाथाम् । पाप्मा हतो न सोमः ॥ ३५ ॥ प्रागपागुदगधराक्सर्व्वतस्त्वा दिशऽआधावन्तु । अम्ब निष्परसमरीर्विदाम् ॥३६॥ त्वमङ्ग प्रशंᳫसिषोदेवः शविष्ठमर्त्यम् । न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥ ३७ ॥

॥ इति षष्ठोऽध्यायः ॥

---

# अथ सप्तमोऽध्यायः ॥

---

ऋषिः—गोतमः १—६ वसिष्ठः ७ मधुच्छन्दाः ८, ३३ गृत्समदः ६, ३४ त्रिसदस्युः १० मेधातिथिः ११ वत्सारः काश्यपः १२—२३ भरद्वाजः २४, २५, ३६ देवश्रवाः २६—३० विश्वामित्रः ३१, ३५—३८ त्रिशोकः ३२ वत्सः ४० प्रस्कण्वः ४१ कुत्सः ४२ आङ्गिरसः ४३—४८ ।

देवता—प्राणः १ सोमः २, २१ विद्वांसः ३, ४६ मघवा ४ ईश्वरः ५ योगी ६ वायुः ७ इन्द्रवायू ८ मित्रावरुणौ ६, १० अश्विनौ ११ विश्वेदेवाः १२—१७, १६, २२—२४, ३२—३४ प्रजापतिः १८, २६, ३०, ३५—३८, ४०, ४४, ४५ यज्ञः २०, २६ वैश्वानरः २५ यज्ञपतिः २७, २८ इन्द्राग्नी ३१ प्रजासेनापतिः ३६ सूर्य्यः ४१, ४२ अन्तर्य्यामी जगदीश्वरः ४३ वरुणः ४७ आत्मा ४८ ।

छन्दः—भुरिगार्ष्यनुष्टुप् १ निचृदार्षीपङ्क्तिः २ विराड्ब्राह्मी जगती ३ आर्ष्युष्णिक् ४ आर्षीपङ्क्तिः ५ भुरिक् त्रिष्टुप् ६ निचृज्जगती ७ आर्षी गायत्री क स्वराड् गायत्री र ८ आर्षी गायत्री क आसुरी गायत्री र ६ ब्राह्मी बृहती १० ब्राह्मी उष्णिक् ११ निचृदार्षी

जगती [क] पङ्क्तिः [ख] १२ निचृदार्षी त्रिष्टुप् [क] प्रजापत्या गायत्री [ख] १३ स्वराड् जगती १४ निचृद्ब्राह्म्यनुष्टुप् १५ निचृदार्षी त्रिष्टुप् [क] साम्नी गायत्री [ख] १६ स्वराड् ब्राह्मीत्रिष्टुप् १७ निचृत्त्रिष्टुप् [क] प्राजापत्या गायत्री [ख] १८ भुरिगार्षीपङ्क्तिः १९ निचृदार्षी जगती २० स्वराड् ब्राह्मीत्रिष्टुप् [क] याजुषी जगती [ख] २१ ब्राह्मीत्रिष्टुप् २२ अनुष्टुप् [१] प्राजापत्या अनुष्टुप् [२] स्वराट् साम्न्यनुष्टुप् [३] भुरिगार्षी गायत्री [४] भुरिक् साम्न्यनुष्टुप् [५] २३ आर्षी त्रिष्टुप् २४ याजुष्यनुष्टुप् [क] विराडार्षी बृहती [ख] २५ स्वराड् ब्राह्मी बृहती २६ आसुर्य्यनुष्टुप् [१], [२], [६], आसुर्य्युष्णिक् [३], [७] साम्नी गायत्री [४] आसुरी गायत्री [५] २७ ब्राह्मी बृहती २८ आर्षी पंक्तिः [क] भुरिक्साम्नी पङ्क्तिः [ख] २९ साम्नी गायत्री [१], [३], [४], [५], [९], [११] आसुर्य्यनुष्टुप् [२], [६], [१०], [१२] याजुषी पंक्तिः [७], [८] आसुर्य्युष्णिक् [१३] ३० आर्षी त्रिष्टुप् ३१ आर्षी गायत्री [क], आर्ष्युष्णिक् [ख] ३२ आर्षी गायत्री [क] आर्षी बृहती [ख] ३३ आर्षी गायत्री [क] निचृदार्ष्युष्णिक् [ख] ३४ निचृदार्षी त्रिष्टुप् [क], आर्ष्युष्णिक् [ख] ३५ विराडार्षीत्रिष्टुप् [१] आर्ष्युष्णिक् [२] साम्न्युष्णिक् [३] ३६ निचृदार्षीत्रिष्टुप् [क] प्राजापत्यात्रिष्टुप् [ख] ३७, ३८ भुरिक्पङ्क्तिः [क] साम्नी त्रिष्टुप् [ख] ३९ आर्षी गायत्री [क] विराडार्षी गायत्री [ख] ४० भुरिगार्षी गायत्री ४१ भुरिगार्षी त्रिष्टुप् ४२, ४३, ४४ निचृज्जगती ४५ भुरिगार्षी त्रिष्टुप् ४६ भुरिक् प्राजापत्या जगती [१] स्वराट् प्राजापत्या जगती [२] निचृदार्षी जगती [३] विराडार्षी जगती [४] ४७ आर्ष्युष्णिक् ४८ ।

स्वरः—गान्धारः १, १५ पञ्चमः २, ५, २९ निषादः ३. ७. १४, २०. ४५, ४७, ऋषभः ४, ११, ४८ धैवतः ६, १७, १९, २२, २४. ३१, ३७, ३८, ४२—४४, ४६ षड्जः ८, ९, ४०, ४१ मध्यमः १०, २६, २८ निषादः [क], पञ्चमः [ख] १२ धैवतः [क] षड्जः [ख] १३, १६, १८ धैवतः [क] निषादः [ख] २१ गान्धारः [१], [२], [३], [५] षड्जः [४] २३ गान्धारः [क] मध्यमः [ख] २५ गान्धारः [१], [२], [४], [५], [६] षड्जः [३], ऋषभः [७], २७ षड्जः [१], [३], [४], [५], [९], [११] गान्धारः [२], [६], [१०], [१२] पञ्चमः [७], [८] ऋषभः [१३] ३० षड्जः [क] ऋषभः [ख] ३२, ३४ षड्जः [क] मध्यमः [ख] ३३ धैवतः [क] ऋषभः [ख] ३५, ३६ पञ्चमः [क] धैवतः [ख] ३९ ॥

॥ ओ३म् ॥ वाचस्पतये पवस्व वृष्णोऽअꣳशुभ्याङ्गभस्तिपूतः । देवो देवेभ्यः पवस्व येषाम्भागोऽसि ॥ १ ॥ मधुमतीर्न इषस्कृधि यत्ते सोमादाभ्यन्नाम जागृवि तस्मै ते सोम सोमाय स्वाहा स्वाहोर्वन्तरिक्षमन्वेमि ॥ २ ॥ स्वाङ्कृतोऽसि

विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यो देवांशो यस्मै त्वेडे तत्सत्यमुपरिप्रुता भङ्गेन हतोऽसौ फट् प्राणाय त्वा व्यानाय त्वा ॥ ३ ॥ उपयामगृहीतोऽस्यन्तर्यच्छ मघवन् पाहि सोमम् । उरुष्य राय एषो यजस्व ॥ ४ ॥ अन्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षम् । सजूर्देवेभिरवरैः परैश्चान्तर्यामे मघवन् मादयस्व ॥ ५ ॥ स्वाङ्कृतोऽसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्य उदानाय त्वा ॥ ६ ॥ आवायो भूष शुचिपा उप नः सहस्रन्ते नियुतो विश्ववार । उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयं वायवे त्वा ॥७॥ इन्द्रवायू इमे सुता उपप्रयोभिरागतम् । इन्दवो वामुशन्ति हि । उपयामगृहीतोऽसि वायव इन्द्रवायुभ्यान्त्वैष ते योनिः सजोषोभ्यां त्वा ॥८॥ अयं वाम्मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतꣳ हवम् । उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा ॥ ९ ॥ राया वयꣳ ससवाꣳसो मदेम हव्येन देवा यवसेन गावः । तान्धेनुम्मित्रावरुणा युवन्नो विश्वाहा धत्तमनपस्फुरन्तीमेष ते योनिर्ऋतायुभ्यान्त्वा ॥ १० ॥ या वाङ्कशा मधुमत्यश्विना सूनृतावती । तया यज्ञम्मिमिक्षतम् । उपयामगृहीतोऽस्यश्विभ्यान्त्वैष ते योनिर्माध्वीभ्यां त्वा ॥ ११ ॥ तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदꣳ स्वर्विदम् । प्रतीचीनम्वृजनन्दोहसे धुनिमाशुं जयन्तमनु यासु वर्द्धसे । उपयामगृहीतोऽसि शण्डाय त्वैष ते योनिर्वीरतां पाह्यपमृष्टः शण्डो देवास्त्वा शुक्रपाः प्रणयन्त्वनाधृष्टासि ॥ १२ ॥ सुवीरो वीरान् प्रजनयन् परीह्यभि रायस्पोषेण यजमानम् । सञ्जग्मानो दिवा पृथिव्या शुक्रः शुक्रशोचिषा निरस्तः शण्डः शुक्रस्याधिष्ठानमसि ॥ १३ ॥ अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्याम । सा प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रो अग्निः ॥ १४ ॥ स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमा जुहोत स्वाहा । तृम्पन्तु होत्रा मध्वो याः स्विष्टा याः सुप्रीताः सुहुता यत्स्वाहा याडग्नीत् ॥१५॥ अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने । इममपाꣳ सङ्गमे सूर्यस्य शिशुन्न विप्रा मतिभीरिहन्ति उपयामगृहीतोऽसि मर्काय त्वा ॥१६॥ मनो न येषु हवनेषु तिग्मं विपः शच्या वनुथो द्रवन्ता । आ यः शर्य्याभिस्तुविनृम्णो अस्याश्रीणीतादिशङ्गभस्तावेष ते योनिः प्रजाः पाह्यपमृष्टो मर्को देवास्त्वा मन्थिपाः प्रणयन्त्वनाधृष्टासि ॥ १७ ॥ सुप्रजाः प्रजाः प्रजनयन् परीह्यभि रायस्पोषेण यजमानम् । सञ्जग्मानो दिवा पृथिव्या मन्थी

मन्थिशोचिषा निरस्तो मर्को [२] मन्थिनोऽधिष्ठानमसि ॥ १८ ॥ ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ। अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥ १९ ॥ उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणः । पाहि यज्ञं पाहि यज्ञपतिं विष्णुस्त्वामिन्द्रियेण पातु विष्णुन्त्वम् पाह्यभि सवनानि पाहि ॥२०॥ [क] सोमः पवते सोमः पवतेऽस्मै ब्रह्मणेऽस्मै क्षत्रायास्मै सुन्वते यजमानाय पवत इष ऊर्जे पवतेऽद्भ्य ओषधीभ्यः पवते द्यावापृथिवीभ्याम्पवते सुभूताय पवते विश्वेभ्यस्त्वा देवेभ्य [२] एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ २१ ॥ उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थाव्यं गृह्णामि । यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वैष ते योनिरुक्थेभ्यस्त्वा देवेभ्यस्त्वा देवाव्यं गृह्णामि यज्ञस्यायुषे गृह्णामि ॥ २२ ॥ [१] मित्रावरुणाभ्यां त्वा देवाव्यं यज्ञस्यायुषे गृह्णामीन्द्राय त्वा देवाव्यं यज्ञस्यायुषे गृह्णामी[२]न्द्राग्निभ्यान्त्वा देवाव्यं यज्ञस्यायुषे गृह्णामी[३]न्द्रावरुणाभ्यान्त्वा देवाव्यं यज्ञस्यायुषे गृह्णामी[४]न्द्राबृहस्पतिभ्यान्त्वा देवाव्यं यज्ञस्यायुषे गृह्णामी[५]न्द्राविष्णुभ्यान्त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि ॥ २३ ॥ मूर्द्धानन्दिवो अरतिम्पृथिव्या वैश्वानरमृत आजातमग्निम् । कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥ २४ ॥ [क] उपयामगृहीतोऽसि [२] ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तम एष ते योनिर्वैश्वानराय त्वा । ध्रुवं ध्रुवेण मनसा वाचा सोममवनयामि । अथा न इन्द्र इद्विशोऽसपत्नाः समनसस्करत् ॥ २५ ॥ यस्ते द्रप्सस्कन्दति यस्ते अꣳशुर्ग्रावच्युतो धिषणयोरुपस्थात् । अध्वर्य्योर्वा परि वा यः पवित्रात्तन्ते जुहोमि मनसा वषट्कृतꣳ स्वाहा देवानामुत्क्रमणमसि ॥ २६ ॥ [१] प्राणाय मे वर्चोदा वर्चसे पवस्व [२] व्यानाय मे वर्चोदा वर्चसे पवस्वो[३]दानाय मे वर्चोदा वर्चसे पवस्व [४] वाचे मे वर्चोदा वर्चसे पवस्व [५] क्रतूदक्षाभ्यां मे वर्चोदा वर्चसे पवस्व [६] श्रोत्राय मे वर्चोदा वर्चसे पवस्व [७] चक्षुर्भ्याम्मे वर्चोदसौ वर्चसे पवेथाम् ॥ २७ ॥ आत्मने मे वर्चोदा वर्चसे पवस्वौजसे मे वर्चोदा वर्चसे पवस्वायुषे मे वर्चोदा वर्चसे पवस्व विश्वाभ्यो मे प्रजाभ्यो वर्चोदसौ वर्चसे पवेथाम् ॥ २८ ॥ [क] कोऽसि कतमोऽसि कस्यासि को नामासि । यस्य ते नामामन्महि यं त्वा सोमेनातीतृपाम । [२] भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याꣳ सुवीरो वीरैः सुपोषः पोषैः ॥ २९ ॥ [१] उपयामगृहीतोऽसि मधवे त्वो[२]पयामगृहीतोऽसि माधवाय त्वो[३]पयामगृहीतोऽसि शुक्राय त्वो[४]पयामगृहीतोऽसि शुचये त्वो[५]पयामगृहीतोऽसि नभसे त्वो[६]पयामगृहीतोऽसि नभस्याय त्वो[७]पयामगृहीतोऽसीषे त्वो-

पयामगृहीतोऽस्यूर्जे त्वोपयामगृहीतोऽसि सहसे त्वोपयामगृहीतोऽसि सहस्याय त्वोपयामगृहीतोऽसि तपसे त्वोपयामगृहीतोऽसि तपस्याय त्वोपयामगृहीतोऽस्यꣳहसस्पतये त्वा ॥३०॥ इन्द्राग्नी आगतꣳसुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता । उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यान्त्वा ॥३१॥ आघाये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो युवा सखा । उपयामगृहीतोऽस्यग्नीन्द्राभ्यान्त्वैष ते योनिरग्नीन्द्राभ्यान्त्वा ॥ ३२ ॥ ओमासश्चर्षणीधृतो विश्वे देवास आगत । दाश्वाꣳसो दाशुषः सुतम् । उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यः एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ३३ ॥ विश्वे देवास आगत शृणुता म इमꣳहवम् । एदं बर्हिर्निषीदत । उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ३४ ॥ इन्द्र मरुत्व इह पाहि सोमं यथा शार्य्याते अपिबः सुतस्य । तव प्रणीती तव शूर शर्म्मन्नाविवासन्ति कवयः सुयज्ञाः । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ३५ ॥ मरुत्वन्तं वृषभं वावृधानमकवारिन्दिव्यꣳशासमिन्द्रम् । विश्वासाहमवसे नूतनायोग्रꣳसहोदामिह तꣳहुवेम । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते । उपयामगृहीतोऽसि मरुतान्त्वौजसे ॥ ३६ ॥ सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् । जहि शत्रूँ२॥ रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥३७॥ मरुत्वाँ२॥ इन्द्र वृषभो रणाय पिबा सोममनुष्वधम्मदाय । आसिञ्चस्व जठरे मध्व ऊर्म्मिं त्वꣳ राजासि प्रतिपत्सुतानाम् । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ३८ ॥ महाँ२॥ इन्द्रो नृवदा चर्षणीप्रा उत द्विबर्हा अमिनः सहोभिः । अस्मद्र्यग्वावृधे वीर्य्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् । उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥ ३९ ॥ महाँ२॥ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ२॥ इव । स्तोमैर्वत्सस्य वावृधे । उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥४०॥ उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्य्यꣳस्वाहा ॥ ४१ ॥ चित्रन्देवानामुदगादनीकं चक्षुर्म्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षꣳसूर्य्य आत्मा जगतस्तस्थुषश्च स्वाहा ॥ ४२ ॥ अग्ने नय सुपथा राये अस्मा-

न्विश्वा॑नि देव व॒युना॑नि वि॒द्वान्। यु॒यो॒ध्य॒स्मज्जु॑हुरा॒णमेनो॒ भूयि॑ष्ठान्ते॒ नम॑ उक्तिं वि॒धेम॒ स्वाहा॑ ॥ ४३ ॥ अ॒यन्नो॑ अ॒ग्निर्वरि॑वस्कृणोत्व॒यम्मृधः॑ पु॒र ए॑तु प्र॒भिन्दन्। अ॒यं वाजा॑ञ्जयतु॒ वाज॑साताव॒यꣳ शत्रू॑ञ्जयतु॒ जर्हृ॑षाणः॒ स्वाहा॑ ॥ ४४ ॥ रू॒पेण॑ वो रू॒पम॒भ्यागा॑न्तु॒थो वो॑ वि॒श्ववे॑दा॒ विभ॑जतु। ऋ॒तस्य॑ प॒था प्रेत॑ च॒न्द्रद॑क्षिणा॒ वि स्वः॒ पश्य॒ व्य॒न्तरि॑क्षं॒ यत॑स्व सद॒स्यैः॑ ॥ ४५ ॥ ब्रा॒ह्म॒णम॒द्य वि॑देयम्पितृ॒मन्त॑म्पैतृम॒त्यमृषि॑मार्षे॒यꣳ सु॒धातु॑दक्षिणम्। अ॒स्मद्रा॑ता देव॒त्रा ग॑च्छत प्रदा॒तार॒मावि॑शत ॥ ४६ ॥ [1] अ॒ग्नये॑ त्वा॒ मह्यं॒ वरु॑णो ददातु॒ सो॒ऽमृत॒त्वम॑शीया॒युर्दा॒त्र ए॑धि॒ मयो॒ मह्य॑म् प्रतिग्र॒ही॒त्रे [2] रु॒द्राय॑ त्वा॒ मह्यं॒ वरु॑णो ददातु॒ सो॒ऽमृत॒त्वम॑शीय प्रा॒णो दा॒त्र ए॑धि॒ वयो॒ मह्य॑म् प्रतिग्र॒ही॒त्रे [3] बृह॒स्पत॑ये त्वा॒ मह्यं॒ वरु॑णो ददातु॒ सो॒ऽमृत॒त्वम॑शीय॒ त्वग्दा॒त्र ए॑धि॒ मयो॒ मह्य॑म् प्रतिग्र॒ही॒त्रे [4] य॒माय॑ त्वा॒ मह्यं॒ वरु॑णो ददातु॒ सो॒ऽमृत॒त्वम॑शीय॒ हयो॑ दा॒त्र ए॑धि॒ मयो॒ मह्य॑म् प्रतिग्र॒ही॒त्रे ॥ ४७ ॥ को॒ऽदा॒त्कस्मा॑ अदा॒त्कामो॒ऽदा॒त्कामा॑यादात्। कामो॑ दा॒ता कामः॑ प्रतिग्र॒ही॒ता कामै॒तत्ते॑ ॥ ४८ ॥

॥ इति सप्तमोऽध्यायः ॥

---

# अथाष्टमोऽध्यायः ॥

---

ऋषिः—आङ्गिरसः १—३ कुत्सः ४, ५ भरद्वाजः ६—१४ अत्रिः १५—३० गोतमः ३१, ३३, ३५ मेधातिथिः ३२ मधुच्छन्दाः ३४ विवस्वान् ३६, ३७ वैखानः ३८, ३९ प्रस्कण्वः ४०, ४१ कुसुरुविन्दुः ४२, ४३ शासः ४४—४७ देवाः ४८—५३ वसिष्ठः ५४—६२ कश्यपः ६३।

देवता—बृहस्पतिस्सोमः १ गृहपतिः २, ५, ६, १०, १२, १४—१६, १८, २०—२६, ३३—३५ ४३ आदित्यो गृहपतिः ३, ४ सविता गृहपतिः ७ विश्वेदेवा गृहपतयः ८, १७, १९ गृहपतयो विश्वेदेवाः ९, १३ दम्पती २७—३२ परमेश्वरः ३६ सम्राड् माण्डलिकौ राजानौ ३७ राजादयो गृहपतयः ३८, ४० राजादयो गृहस्थाः ३९ सूर्यः ४१ पत्नी

४२, ४३ इन्द्रः ४४ ईश्वरसभेशौ राजानौ ४५ विश्वेकर्मेन्द्रः ४६, ४७ प्रजापतयः ४८, ५० विश्वेदेवाः प्रजापतयः ४९ प्रजापतयो गृहस्थाः ५१ प्रजापतिः ५२ परमेष्ठी प्रजापतिः ५४ इन्द्रादयः ५५ विश्वेदेवा गृहस्थाः ५६ विश्वेदेवाः ५७—६१ यज्ञः ६२, ६३ ।

छन्दः—आर्ची पङ्क्तिः १ भुरिक् पङ्क्तिः २ निचृदार्षी पङ्क्तिः ३ निचृज्जगती ४ प्राजापत्या अनुष्टुप्[क] निचृदार्षी जगती[र] ५ निचृदार्षी त्रिष्टुप् ६ विराड् ब्राह्म्यनुष्टुप् ७ प्राजापत्या गायत्री[क] निचृदार्षी बृहती[र] ८ प्राजापत्या गायत्री[उ] आर्ष्युष्णिक्[क] स्वराडार्षी पङ्क्तिः[र] ९ विराड् ब्राह्मी बृहती १० निचृदार्ष्यनुष्टुप् ११ आर्षीपङ्क्तिः १२ साम्न्युष्णिक्[१] निचृत्साम्न्युष्णिक्[२,३] प्राजापत्योष्णिक्[४] निचृदार्ष्युष्णिक्[५] १३ विराडार्षीत्रिष्टुप् १४, १६, भुरिगार्षी त्रिष्टुप् १५, १९, ३६ स्वराडार्षी त्रिष्टुप् १७, २०, ६२, आर्षी त्रिष्टुप् १८, २४ स्वराडार्ष्युष्णिक् २१ भुरिक् साम्न्युष्णिक्[क] विराडार्ची बृहती[र] २२ याजुष्युष्णिक्[उ] भुरिगार्षी त्रिष्टुप्[क] आसुरी गायत्री[र] २३ भुरिगार्षी पङ्क्तिः २५ स्वराडार्षी बृहती २६ भुरिक्प्राजापत्यानुष्टुप्[क] स्वराडार्षी बृहती[र] २७ साम्न्युष्णिक्[उ] आसुर्य्युष्णिक्[क] प्राजापत्यानुष्टुप्[र] २८ भुरिगार्ष्यनुष्टुप् २९ आर्षीजगती ३० आर्षी गायत्री ३१, ३२ आर्ष्यनुष्टुप्[क] विराडार्ष्युष्णिक्[र] ३३ विराडार्ष्यनुष्टुप्[क,र] ३४ विराडार्ष्यनुष्टुप् ३५ साम्नी त्रिष्टुप्[क] विराडार्ची त्रिष्टुप्[र] ३७ भुरिक् त्रिपाद्गायत्री[उ] स्वराडार्च्यनुष्टुप्[क] भुरिगार्च्यनुष्टुप्[र] ३८ आर्षीगायत्री[र,क] आर्ष्युष्णिक्[र] ३९ आर्षी गायत्री[उ,क] स्वराडार्षी गायत्री[र] ४० निचृदार्षी गायत्री[क] स्वराडार्षी गायत्री[र] ४१ स्वराड् ब्राह्म्युष्णिक् ४२ आर्षी पङ्क्तिः ४३ भुरिगनुष्टुप्[क] विराडार्षी गायत्री[र] ४४ भुरिक् आर्षी त्रिष्टुप्[क] स्वराडार्ष्यनुष्टुप्[र] ४५ भुरिगार्षी त्रिष्टुप्[क] विराडार्ष्यनुष्टुप्[र] ४६ विराड् ब्राह्मी बृहती ४७ याजुषी त्रिष्टुप्[१,३,४,५] याजुषी जगती[२] साम्नी बृहती[६] ४८ विराट् प्राजापत्या जगती भुरिगार्ष्युष्णिक्[र] ४९ स्वराडार्षी जगती ५० आर्षी जगती ५१ भुरिगार्षी बृहती ५२ आर्ष्यनुष्टुप्[१] आसुर्य्युष्णिक्[२] प्राजापत्या बृहती[३] विराट् प्राजापत्या पंक्तिः[४] ५३ साम्न्युष्णिक् ५४ आर्षी पंक्तिः ५५ आर्षी बृहती ५६ भुरिग् साम्नी बृहती ५७ भुरिगार्षी जगती ५८ आर्षी बृहती[क] विराडार्षी गायत्री[र] ५९ स्वराट् साम्नी त्रिष्टुप् ६० साम्न्युष्णिक् ६१ स्वराडार्षी गायत्री ६३ ।

स्वरः—पञ्चमः १—३, १२, २५, ४३, ५५ निषादः ४, ५०, ५१, ५८ गान्धारः [क] निषादः [र] ५ धैवतः ६, १४—२०, २४, ३६, ३७, ६०, ६२ गान्धारः ७, ११, २६, ३४, ३५, ४५ षड्जः [क] मध्यमः [र] ८ षड्जः [उ] ऋषभः [क] पञ्चमः [र] ९ मध्यमः १०, २६, ३०, ४७, ५२, ५६ ऋषभः १३, २१, ४२, ५४, ६१ ऋषभः [क] मध्यमः [र] २२ ऋषभः [उ] धैवतः [क] षड्जः [र] २३ गान्धारः [क] मध्यमः [र] २७ ऋषभः [उ], [क] गान्धारः [र] २८ षड्जः ३१, ३२, ४०, ४१, ४४, ६३ गान्धारः [क] ऋषभः [र] ३३ षड्जः [क] गान्धारः [र] ३८ षड्जः [क] ऋषभः [र] ३९ धैवतः [क] गान्धारः [र] ४६ धैवतः [१], [३], [४], [५] निषादः [२] मध्यमः [६] ४८ निषादः [क] धैवतः [र] ४९ गान्धारः [१] ऋषभः [२] मध्यमः [३] पञ्चमः [४] ५३ निषादः [क] षड्जः ५९ ॥

॥ ओ३म् ॥ उपयामगृहीतोऽस्यादित्येभ्यस्त्वा विष्ण उरुगायैष ते सोमस्तꣳ रक्षस्व मा त्वा दभन् ॥ १ ॥ कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यत आदित्येभ्यस्त्वा ॥ २ ॥ कदाचन प्रयुच्छस्युभे निपासि जन्मनी । तुरीयादित्य सवनन्त इन्द्रियमा तस्थावमृतं दिव्यादित्येभ्यस्त्वा ॥३॥ यज्ञो देवानाम्प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आवोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासदादित्येभ्यस्त्वा ॥ ४ ॥ [क] विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन् मत्स्व । [र] श्रदस्मै नरो वचसे दधातन यदाशीर्दा दम्पती वाममश्नुतः । पुमान् पुत्रो जायते विन्दते वस्वधा विश्वहारप एधते गृहे ॥ ५ ॥ वाममद्य सवितर्वाममु श्वो दिवे दिवे वाममस्मभ्यꣳ सावीः । वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥ ६ ॥ उपयामगृहीतोऽसि सावित्रोऽसि चनोधाश्चनोधा असि चनो मयि धेहि । जिन्व यज्ञं जिन्व यज्ञपतिम्भगाय देवाय त्वा सवित्रे ॥ ७ ॥ [क] उपयामगृहीतोऽसि [र] सुशर्म्मासि सुप्रतिष्ठानो बृहदुक्षाय नमः विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ८ ॥ [उ] उपयामगृहीतोऽसि [क] बृहस्पतिसुतस्य देव सोम त इन्दोरिन्द्रियावतः । पत्नीवतो ग्रहाँ२॥ ऋध्यासम् । [र] अहम्परस्तादहमवस्ताद्यदन्तरिक्षन्तदु मे पिताभूत् । अहꣳ सूर्य्यमुभयतो ददर्शाहन्देवानाम्परमङ्गुहा यत् ॥ ९ ॥ अग्ना३ इ पत्नीवन्त्सजूर्देवेन त्वष्ट्रा सोमम्पिब स्वाहा । प्रजापतिर्वृषासि रेतोधा रेतो मयि धेहि प्रजापतेस्ते वृष्णो रेतोधसो रेतोधामशीय ॥ १० ॥ उपयामगृहीतोऽसि हरिरसि हारियोजनो हरिभ्यान्त्वा । हर्य्योर्द्धाना स्थ सहसोमा इन्द्राय ॥ ११ ॥ यस्ते अश्वसनिर्भक्षो यो गोस-

निस्तस्य त इष्टयजुषस्तुतस्तोमस्य शस्तोक्थस्योपहूतस्योपहूतो भक्षयामि ॥ १२ ॥ देवकृतस्यैनसोऽवयजनमसि [1] मनुष्यकृतस्यैनसोऽवयजनमसि [2] पितृकृतस्यैनसोऽवयजनमस्या [3] त्मकृतस्यैनसोऽवयजनमस्येनस [4] एनसोऽवयजनमसि । [5] यच्चाहमेनो विद्वाँश्चकार यच्चाविद्वाँस्तस्य सर्वस्यैनसोऽवयजनमसि ॥ १३ ॥ संवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥ १४ ॥ समिन्द्र णो मनसा नेषि गोभिः सꣳ सूरिभिर्मघवन्त्सꣳ स्वस्त्या । संब्रह्मणा देवकृतं यदस्ति सन्देवानाꣳ सुमतौ यज्ञियानाꣳ स्वाहा ॥ १५ ॥ संवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥ १६ ॥ धाता रातिः सवितेदं जुषन्ताम्प्रजापतिर्निधिपा देवो अग्निः । त्वष्टा विष्णुः प्रजया सꣳ रराणा यजमानाय द्रविणन्दधात स्वाहा ॥ १७ ॥ सुगा वो देवाः सदना अकर्म्म य आजग्मेदꣳ सवनं जुषाणाः । भरमाणा वहमाना हवीꣳष्यस्मे धत्त वसवो वसूनि स्वाहा ॥ १८ ॥ याँ२॥ आवह उशतो देव देवाँस्तान् प्रेरय स्वे अग्ने सधस्थे । जक्षिवाꣳसः पपिवाꣳसश्च विश्वे सुऽ घर्म्मꣳस्वरातिष्ठतानु स्वाहा ॥ १९ ॥ वयꣳ हि त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह । ऋधगया ऋधगुताशमिष्ठाः प्रजानन्यज्ञमुपयाहि विद्वान्त्स्वाहा ॥ २० ॥ देवा गातुविदो गातुं वित्वा गातुमित । मनसस्पत इमन्देव यज्ञꣳ स्वाहा वाते धाः ॥ २१ ॥ [क] यज्ञ यज्ञङ्गच्छ यज्ञपतिङ्गच्छ स्वां योनिङ्गच्छ स्वाहा । [२] एष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्ववीरस्तञ्जुषस्व स्वाहा ॥ २२ ॥ [उ] माहिर्भूर्म्मा पृदाकुः [क] उरुꣳ हि राजा वरुणश्चकार सूर्य्याय पन्थामन्वेतवा उ । अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् । [२] नमो वरुणायाभिष्ठितो वरुणस्य पाशः ॥ २३ ॥ अग्नेरनीकमप आविवेशापान्नपात् प्रति रक्षन्नसुर्य्यम् । दमे दमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्यत् स्वाहा ॥२४॥ समुद्रे ते हृदयमप्स्वन्तः सं त्वा विशन्त्वोषधीरुतापः । यज्ञस्य त्वा यज्ञपते सूक्तोक्तौ नमो वाके विधेम यत् स्वाहा ॥ २५ ॥ देवीराप एष वो गर्भस्तꣳसुप्रीतꣳसुभृतम्बिभृत । देव सोमैष ते लोकस्तस्मिञ्छञ्च वक्ष्व परि च वक्ष्व ॥२६॥ [क] अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । [२] अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतम्पुरुराव्णो देव रिषस्पाहि देवानाꣳसमिदसि ॥ २७ ॥ [व] एजतु दशमास्यो गर्भो जरायुणा सह । [२] यथा यं वायुरेजति यथा समुद्र एजति । [क] एवायं दशमास्यो अस्रज्जरायुणा सह ॥ २८ ॥ यस्यै ते यज्ञियो गर्भो यस्यै

योनिर्हिरण्ययीं । अङ्गान्यहुता यस्य तम्मात्रा समजीगमꣳ स्वाहा ॥ २६ ॥ पुरुदस्मो विषुरूप इन्दुरन्तर्महिमानमानञ्ज धीरः । एकपदीन्द्विपदीन्त्रिपदीञ्चतुष्पदीमष्टापदीम्भुवनानु प्रथन्ताꣳ स्वाहा ॥ ३० ॥ मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः ॥ ३१ ॥ मही द्यौः पृथिवी च न इमं यज्ञम्मिमिक्षताम् । पिपृतान्नो भरीमभिः ॥ ३२ ॥ [क] आतिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी । अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना । [र] उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ३३ ॥ [क] युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा । अथा न इन्द्र सोमपा गिरामुपश्रुतिञ्चर । [र] उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ३४ ॥ [क] इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् । ऋषीणां च स्तुतीरुप यज्ञं च मानुषाणाम् । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥३५॥ यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया सꣳरराणस्त्रीणि ज्योतीꣳषि सचते स षोडशी ॥ ३६ ॥ [क] इन्द्रश्च सम्राड् वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतम् । [र] तयोरहमनु भक्षं भक्षयामि वाग्देवी जुषाणा सोमस्य तृप्यतु सह प्राणेन स्वाहा ॥३७॥ [उ] अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिम्मयि पोषम् । [क] उपयामगृहीतोऽस्यग्नये त्वा वर्चस एष ते योनिरग्नये त्वा वर्चसे । [र] अग्ने वर्चस्विन्वर्चस्वाँस्त्वन्देवेष्वसि वर्चस्वानहम्मनुष्येषु भूयासम् ॥३८॥ [उ] उत्तिष्ठन्नोजसा सह पीत्वी शिप्रे अवेपयः सोममिन्द्र चमू सुतम् । [क] उपयामगृहीतोऽसीन्द्राय त्वौजस एष ते योनिरिन्द्राय त्वौजसे । [र] इन्द्रौजिष्ठौजिष्ठस्त्वन्देवेष्वस्योजिष्ठोऽहम्मनुष्येषु भूयासम् ॥ ३९ ॥ [क] अदृश्रमस्य केतवो वि रश्मयो जनाँ२॥ अनु । भ्राजन्तो अग्नयो यथा । [र] उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय । सूर्य भ्राजिष्ठ भ्राजिष्ठस्त्वं देवेष्वासि भ्राजिष्ठोऽहम्मनुष्येषु भूयासम् ॥ ४० ॥ [क] उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् [र] उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय ॥ ४१ ॥ आ जिघ्र कलशम्मह्या त्वा विशन्त्विन्दवः । पुनरूर्जा निवर्त्तस्व सा नः सहस्रन्धुक्ष्वोरुधारा पयस्वती पुनर्माविशताद्रयिः ॥ ४२ ॥ इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेऽदिते सरस्वति महि विश्रुति । एता तेऽअघ्न्ये नामानि देवेभ्यो मा सुकृतं ब्रूतात् ॥ ४३॥ [क] वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । यो अस्माँ२॥ अभिदासत्यधरं

रक्ष्मया तमः । उपयामगृहीतोऽसीन्द्राय त्वा विमृध एष ते योनिरिन्द्राय त्वा विमृधे ॥ ४४ ॥ वाचस्पतिम्विश्वकर्म्माणमूतये मनोजुवं वाजे अद्या हुवेम । सनो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्म्मा । उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्म्मण एष ते योनिरिन्द्राय त्वा विश्वकर्म्मणे ॥ ४५ ॥ विश्वकर्म्मन्हविषा वर्द्धनेन त्रातारमिन्द्रमकृणोरवध्यम् । तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् । उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्म्मण एष ते योनिरिन्द्राय त्वा विश्वकर्म्मणे ॥ ४६ ॥ उपयामगृहीतोऽस्यग्नये त्वा गायत्रच्छन्दसङ्गृह्णामीन्द्राय त्वा त्रिष्टुप्छन्दसं गृह्णामि विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसङ्गृह्णाम्यनुष्टुप्तेऽभिगरः ॥ ४७ ॥ व्रेशीनां त्वा पत्मन्ना धूनोमि । कुकूननानान्त्वा पत्मन्ना धूनोमि । भन्दनानान्त्वा पत्मन्ना धूनोमि । मदिन्तमानान्त्वा पत्मन्ना धूनोमि । मधुन्तमानां त्वा पत्मन्ना धूनोमि । शुक्रं त्वा शुक्र आधूनोम्यन्हो रूपे सूर्यस्य रश्मिषु ॥ ४८ ॥ ककुभꣳ रूपं वृषभस्य रोचते बृहच्छुक्रः शुक्रस्य पुरोगाः सोमः सोमस्य पुरोगाः । यत्ते सोमादाभ्यन्नाम जागृवि तस्मै त्वा गृह्णामि तस्मै ते सोम सोमाय स्वाहा ॥ ४९ ॥ उशिक् त्वन्देव सोमाग्नेः प्रियम्पाथोऽपीहि वशी त्वन्देव सोमेन्द्रस्य प्रियम्पाथोऽपीह्यस्मत्सखा त्वन्देव सोम विश्वेषान्देवानाम्प्रियम्पाथोऽपीहि ॥ ५० ॥ इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहा । उपसृजन्धरुणम्मात्रे धरुणो मातरं धयन् । रायस्पोषमस्मासु दीधरत् स्वाहा ॥ ५१ ॥ सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूम । दिवं पृथिव्या अध्यारुहामाविदाम देवान्त्स्वर्ज्योतिः ॥ ५२ ॥ युवन्तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तन्तमिद्धतं वज्रेण तन्तमिद्धतम् । दूरे चत्ताय छन्त्सद् गहनं यदिनक्षत् । अस्माकꣳ शत्रून् परि शूर विश्वतो दर्म्मा दर्षीष्ट विश्वतः । भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याम सुवीरा वीरैः सुपोषाः पोषैः ॥ ५३ ॥ परमेष्ठ्यभिधीतः प्रजापतिर्वाचि व्याहृतायामन्धो अच्छेतः । सविता सन्यां विश्वकर्म्मा दीक्षायाम्पूषा सोम क्रयण्याम् ॥ ५४ ॥ इन्द्रश्च मरुतश्च क्रयायोपोत्थितोऽसुरः पण्यमानो मित्रः क्रीतो विष्णुः शिपिविष्ट ऊरावासन्नो विष्णुर्नरन्धिषः ॥ ५५ ॥ प्रोह्यमाणः सोम आगतो वरुण आसन्द्यामासन्नोऽग्निराग्नीध्र इन्द्रो हविर्द्धानेऽथर्वोपावह्रियमाणः ॥ ५६ ॥ विश्वे देवा अꣳशुषु न्युप्तो विष्णुराप्रीतपा आप्याय्यमानो यमः सूयमानो विष्णुः सम्भ्रियमाणो वायुः पूयमानः शुक्रः पूतः । शुक्रः क्षीरश्रीर्मन्थी सक्तुश्रीः ॥ ५७ ॥ विश्वे देवाश्चमसेषून्नीतोऽसुर्होमायोद्यतो रुद्रो हूयमानो वातोऽभ्यावृत्तो नृचक्षाः

प्रतिख्यातो भक्षो भक्ष्यमाणः पितरो नाराशंसाः ॥ ५८ ॥ सन्नः सिन्धुरवभृथायोद्यतः समुद्रोऽभ्यवह्रियमाणः सलिलः प्रप्लुतो ययोरोजसा स्कभिता रजांसि वीर्येभिर्वीरतमा शविष्ठा । या पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूतौ ॥ ५९ ॥ देवान्दिवमगन्यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्षमगन्यज्ञस्ततो मा द्रविणमष्टु पितॄन् पृथिवीमगन्यज्ञस्ततो मा द्रविणमष्टु यं कं च लोकमगन्यज्ञस्ततो मे भद्रमभूत् ॥६०॥ चतुस्त्रिंशत्तन्तवो ये वितत्निरे य इमं यज्ञं स्वधया ददन्ते । तेषां छिन्नं सम्वेतद्दधामि स्वाहा घर्मो अप्येतु देवान् ॥ ६१ ॥ यज्ञस्य दोहो विततः पुरुत्रा सो अष्टधा दिवमन्वाततान । स यज्ञ धुक्ष्व महि मे प्रजायां रायस्पोषं विश्वमायुरशीय स्वाहा ॥ ६२ ॥ आ पवस्व हिरण्यवदश्ववत्सोम वीरवत् । वाजं गोमन्तमा भर स्वाहा ॥ ६३ ॥

॥ इत्यष्टमोऽध्यायः ॥

———:o:———

# अथ नवमोऽध्यायः ॥

———:o:———

ऋषिः—इन्द्राबृहस्पती १ बृहस्पतिः २–१३ दधिक्रावा १४, १५ वसिष्ठः १६, १८–२५ नाभानेदिष्ठः १७ तापसः २६—३४ वरुणः ३५, ३६ देववातः ३७–४० ।

देवता—सविता १, ५, १३ इन्द्रः २, ३ राजधर्मराजादयः ४ अश्वः ६ सेनापतिः ७ प्रजापतिः ८, १६, २०, २३—२५ वीरः ९ इन्द्राबृहस्पतिः १०—१२ बृहस्पतिः १४–१८ यज्ञः २१ देशः २२ सोमाग्न्यादित्यविष्णुसूर्य्यबृहस्पतयः २६ अर्य्यमादिमन्त्रोक्ताः २७, २९ अग्निः २८, ३७ सम्राट् ३० अग्न्यादयो मन्त्रोक्ताः ३१ पूषादयो मन्त्रोक्ताः ३२ मित्रादयो मन्त्रोक्ताः ३३ वस्वादयो मन्त्रोक्ताः ३४ विश्वेदेवाः ३५, ३६ रक्षोघ्नः ३८, ३९ यजमानः ४० ।

छन्दः-स्वराडार्षी त्रिष्टुप् १ आर्षीपंक्तिः [क] विकृतिः [र] २ अतिशक्वरी: ३ भूरिक्कृतिः ४ भुरिगष्टिः ५ भुरिग्जगती ६, २४ भुरिगुष्णिक् ७ भुरिक्त्रिष्टुप् ८ धृतिः ९ विराडुत्कृतिः १० जगती ११, १३-१५, १७, ३० स्वराडतिधृतिः १२ भुरिक् पङ्क्तिः १६ निचृत् त्रिष्टुप् १८ निचृद्धृतिः १९ भुरिक्कृतिः २० अत्यष्टिः २१ निचृदत्यष्टिः २२ स्वराट् त्रिष्टुप् २३, २५ अनुष्टुप् २६ स्वराडनुष्टुप् २७ भुरिगनुष्टुप् २८ भुरिगार्षीगायत्री २९ अत्यष्टिः ३१ कृतिः ३२, ३३ निचृज्जगती [क] निचृद्धृतिः [र] ३४ निचृदुत्कृतिः ३५ विकृतिः ३६ निचृदनुष्टुप् ३७ स्वराड्ब्राह्मी बृहती ३८ अतिजगती ३९ भुरिग् ब्राह्मी त्रिष्टुप् ४० ।

स्वरः-धैवतः १, ८, २३, २५, ४० पञ्चमः [क] मध्यमः [र] २ पञ्चमः ३, १६ निषादः ४, ६, ११, १३—१५, १७, १८, २०, २४, ३०, ३२, ३३, ३९ मध्यमः ५, ३६, ३८ ऋषभः ७, ९, १९ षड्जः १०, १२, २९, ३५ गान्धारः २१, २२, २६-२८, ३१, ३७ निषादः [क] ऋषभः [र] ३४ ॥

॥ ओ३म् ॥ देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय । दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाजन्नः स्वदतु स्वाहा ॥ १ ॥ [क] ध्रुवसदन्त्वा नृषदम्मनः सदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् । [र] अप्सुषदं त्वा घृतसदं व्योमसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् पृथिविसदं त्वाऽन्तरिक्षसदं दिविसदं देवसदं नाकसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ २ ॥ अपाꣳरसमुद्वयसꣳ सूर्ये सन्तꣳ समाहितम् । अपाꣳ रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ ३ ॥ ग्रहा ऊर्जाहुतयो व्यन्तो विप्राय मतिम् । तेषां विशिप्रियाणां वोऽहमिषमूर्जꣳ समग्रभमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् । सम्पृचौ स्थः सम्मा भद्रेण पृङ्क्तं विपृचौ स्थो वि मा पाप्मना पृङ्क्तम् ॥ ४ ॥ इन्द्रस्य वज्रोऽसि वाजसास्त्वयाऽयं वाजꣳ सेत् । वाजस्य नु प्रसवे मातरम्महीमदितिं नाम वचसा करामहे । यस्यामिदं विश्वं भुवनमाविवेश तस्यान्नो देवः सविता धर्म साविषत् ॥ ५ ॥ अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवत वाजिनः । देवीरापो यो व ऊर्मिः प्रतूर्त्तिः ककुन्मान्वाजसास्तेनायं वाजꣳ सेत् ॥ ६ ॥ वातो वा मनो वा गन्धर्वाः सप्तविꣳशतिः । ते अग्रेऽश्वमयुञ्जँस्ते अस्मिन् जवमादधुः ॥ ७ ॥ वातरꣳहा भव वाजिन् युज्यमान

इन्द्रस्येव दक्षिणः श्रियैधि । युञ्जन्तु त्वा मरुतो विश्ववेदस आ ते त्वष्टा पत्सु जवन्दधातु ॥ ८ ॥ जवो यस्ते वाजिन्निहितो गुहा यः श्येने परीत्तो अचरच्च वाते । तेन नो वाजिन् बलवान् बलेन वाजजिच्च भव समने च पारयिष्णुः । वाजिनो वाजजितो वाजꣳ सरिष्यन्तो बृहस्पतेर्भागमवजिघ्रत ॥ ९ ॥ देवस्याहꣳ सवितुः सवे सत्यसवसो बृहस्पतेरुत्तमं नाकꣳ रुहेयम् । देवस्याहꣳ सवितुः सवे सत्यसवस इन्द्रस्योत्तमं नाकꣳ रुहेयम् । देवस्याहꣳ सवितुः सवे सत्यप्रसवसो बृहस्पतेरुत्तमं नाकमरुहम् । देवस्याहꣳ सवितुः सवे सत्यप्रसवस इन्द्रस्योत्तमं नाकमरुहम् ॥ १० ॥ बृहस्पते वाजं जय बृहस्पतये वाचं वदत बृहस्पतिं वाजं जापयत । इन्द्र वाजं जयेन्द्राय वाचं वदतेन्द्रं वाजं जापयत ॥ ११ ॥ एषा वः सा सत्या संवागभूद्यया बृहस्पतिं वाजमजीजपताजीजपत बृहस्पतिं वाजं वनस्पतयो विमुच्यध्वम् । एषा वः सा सत्या संवागभूद्ययेन्द्रं वाजमजीजपताजीजपतेन्द्रं वाजं वनस्पतयो विमुच्यध्वम् ॥ १२ ॥ देवस्याहꣳ सवितुः सवे सत्यप्रसवसो बृहस्पतेर्वाजजितो वाजं जेषम् । वाजिनो वाजजितोऽध्वन स्कभ्नुवन्तो योजना मिमानाः काष्ठां गच्छत ॥ १३ ॥ एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि । क्रतुं दधिक्रा अनु सꣳ सनिष्यदत्पथामङ्काꣳस्यन्वापनीफणत् स्वाहा ॥१४॥ उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनु वाति प्रगर्धिनः । श्येनस्येव ध्रजतोऽङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः स्वाहा ॥ १५ ॥ शन्नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः । जम्भयन्तोऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्नमीवाः ॥ १६ ॥ ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः । सहस्रसा मेधसाता सनिष्यवो महो ये धनꣳ समिथेषु जभ्रिरे ॥ १७ ॥ वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः । अस्य मध्वः पिबत मादयध्वन्तृप्ता यात पथिभिर्देवयानैः ॥ १८ ॥ आ मा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे । आ मा गन्तांपितरामातरा चा मा सोमो अमृतत्वेन गम्यात् । वाजिनो वाजजितो वाजꣳ ससृवाꣳसो बृहस्पतेर्भागमव जिघ्रत निमृजानाः ॥१९॥ आपये स्वाहा स्वापये स्वाहाऽपिजाय स्वाहा क्रतवे स्वाहा वसवे स्वाहाऽहर्पतये स्वाहाऽह्ने मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहा विनꣳशिन आन्त्यायनाय स्वाहाऽऽन्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाऽधिपतये स्वाहा ॥२०॥ आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पताम् यज्ञो यज्ञेन कल्पताम् । प्रजापतेः प्रजा अभूम स्वर्देवा

अगन्मामृता अभूम ॥२१॥ अस्मे वो अस्त्विन्द्रियमस्मे नृम्णमुत क्रतुरस्मे वर्चांꣳसि सन्तु वः । नमो मात्रे पृथिव्यै नमो मात्रे पृथिव्या इयन्ते राडयन्तासि यमनो ध्रुवोऽसि धरुणः । कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा ॥ २२ ॥ वाजस्येमं प्रसवः सुषुवेऽग्रे सोमꣳ राजानमोषधीष्वप्सु । ता अस्मभ्यं मधुमतीर्भवन्तु वयꣳ राष्ट्रे जागृयाम पुरोहिताः स्वाहा ॥ २३ ॥ वाजस्येमां प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट् । अदित्सन्तं दापयति प्रजानन्त्स नो रयिं सर्ववीरं नियच्छतु स्वाहा ॥ २४ ॥ वाजस्य नु प्रसव आ बभूवेमा च विश्वा भुवनानि सर्वतः । सनेमि राजा परियाति विद्वान् प्रजां पुष्टिं वर्धयमानो अस्मे स्वाहा ॥२५॥ सोमꣳ राजानमवसेऽग्निमन्वारभामहे । आदित्यान्विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिꣳ स्वाहा ॥ २६ ॥ अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय । वाचं विष्णुꣳ सरस्वतीꣳ सवितारं च वाजिनꣳ स्वाहा ॥२७॥ अग्ने अच्छा वदेह नः प्रति नः सुमना भव । प्र नो यच्छ सहस्रजित्त्वꣳ हि धनदा असि स्वाहा ॥ २८ ॥ प्र नो यच्छत्वर्यमा प्र पूषा प्र बृहस्पतिः । प्र वाग्देवी ददातु नः स्वाहा ॥ २९ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । सरस्वत्यै वाचो यन्तुर्यन्त्रियें दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ ॥ ३० ॥ अग्निरेकाक्षरेण प्राणमुदजयत् तमुज्जेषमश्विनौ द्व्यक्षरेण द्विपदो मनुष्यानुदजयतान्तानुज्जेषं विष्णुस्त्र्यक्षरेण त्रीँल्लोकानुदजयत्तानुज्जेषꣳ सोमश्चतुरक्षरेण चतुष्पदः पशूनुदजयत्तानुज्जेषम् ॥ ३१ ॥ पूषा पञ्चाक्षरेण पञ्च दिश उदजयत्ता उज्जेषꣳ सविता षडक्षरेण षड् ऋतूनुदजयत्तानुज्जेषम् । मरुतः सप्ताक्षरेण सप्तग्राम्यान् पशूनुदजयँस्तानुज्जेषम् । बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयत्तामुज्जेषम् ॥ ३२ ॥ मित्रो नवाक्षरेण त्रिवृतꣳ स्तोममुदजयत् तमुज्जेषम् । वरुणो दशाक्षरेण विराजमुदजयत्तामुज्जेषमिन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयत्तामुज्जेषम् । विश्वे देवा द्वादशाक्षरेण जगतीमुदजयँस्तामुज्जेषम् ॥ ३३ ॥ वसवस्त्रयोदशाक्षरेण त्रयोदशꣳ स्तोममुदजयँस्तमुज्जेषम् । रुद्राश्चतुर्दशाक्षरेण चतुर्दशꣳ स्तोममुदजयँस्तमुज्जेषम् । आदित्याः पञ्चदशाक्षरेण पञ्चदशꣳ स्तोममुदजयँस्तमुज्जेषमदितिः षोडशाक्षरेण षोडशꣳ स्तोममुदजयत्तमुज्जेषम् । प्रजापतिः सप्तदशाक्षरेण सप्तदशꣳ स्तोममुदजयत्तमुज्जेषम् ॥ ३४ ॥ एष ते निर्ऋते भागस्तं जुषस्व स्वाहाऽग्निनेत्रेभ्यो देवेभ्यः पुरः सद्भ्यः स्वाहा यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहा विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहा मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा

देवेभ्यं उत्तरासद्भ्यः स्वाहा सोमनेत्रेभ्यो देवेभ्यं उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहा ॥ ३५ ॥ ये देवा अग्निनेत्राः पुरः सदस्तेभ्यः स्वाहा ये देवा यमनेत्रा दक्षिणासदस्तेभ्यः स्वाहा ये देवा विश्वदेवनेत्राः पश्चात्सदस्तेभ्यः स्वाहा । ये देवा मित्रावरुणनेत्रा वा मरुन्नेत्रा वोत्तरासदस्तेभ्यः स्वाहा ये देवाः सोमनेत्रा उपरिसदो दुवस्वन्तस्तेभ्यः स्वाहा ॥ ३६ ॥ अग्ने सहस्व पृतना अभिमातीरपास्य । दुष्टरस्तरन्नरातीर्वर्चो धा यज्ञवाहसि ॥ ३७ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । उपांशोर्वीर्येण जुहोमि हतꣳ रक्षः स्वाहा । रक्षसां त्वा बधायावधिष्म रक्षोऽवधिष्मामुमसौ हतः ॥ ३८ ॥ सविता त्वा सवानांꣳसुवतामग्निर्गृहपतीनांꣳ सोमो वनस्पतीनाम् । बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो वरुणो धर्मपतीनाम् ॥३९॥ इमं देवा असपत्नꣳसुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय । इमममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानांꣳ राजा ॥ ४० ॥

॥ इति नवमोऽध्यायः ॥

——:०:——

# अथ दशमोऽध्यायः ॥

——:०:——

ऋषिः—वरुणः १—१७ देववातः १८-२६ वामदेवः २४-२६ शुनःशेपः २७-३४ ।

देवता—आपः १, ६ वृषा २ अपांपतिः ३ सूर्य्यादयो मन्त्रोक्ताः ४ अग्न्यादयो मन्त्रोक्ताः ५, २३ वरुणः ७, २७ यजमानः ८, १०—१४, १८, १६, २८ प्रजापतिः ६, २० परमात्मा १५ मित्रावरुणौ १६ क्षत्रपतिः १७, २१, ३१, ३२ इन्द्रः २२ सूर्य्यः २४, २५ आसन्दी राजपत्नी २६ अग्निः २६ सवित्रादिमन्त्रोक्ताः ३० अश्विनौ ३३, ३४ ।

छन्दः-निचृदार्षी त्रिष्टुप् १, २२ स्वराड्ब्राह्मी पंक्तिः २ अभिकृतिः [क] निचृज्जगती [२] ३ जगती [१] स्वराट् पंक्तिः [२] स्वराड् विकृतिः [३] स्वराट्संकृतिः [क] भुरिगाकृतिः [४] भुरिक् त्रिष्टुप् [५] ४ भुरिग् धृतिः ५ स्वराड् ब्राह्मी बृहती ६ विराडार्षी त्रिष्टुप् ७ स्वराट् कृतिः ८ भुरिगष्टिः ९ विराडार्षी पङ्क्तिः १० आर्ची पंक्तिः ११, १३ निचृदार्ष्यनुष्टुप् १२ भुरिग् जगती १४ निचृदार्षी पङ्क्तिः १५ स्वराडार्षी जगती १६ आर्षी पंक्तिः १७ स्वराड् ब्राह्मी त्रिष्टुप् १८, ३० विराड् ब्राह्मी त्रिष्टुप् १९ स्वराडतिधृतिः २० भुरिग् ब्राह्मी बृहती २१ जगती २३ भुरिगार्षी जगती २४ आर्षी जगती २५ भुरिगनुष्टुप् २६ पिपीलिका मध्या विराड् गायत्री २७ धृतिः २८ स्वराडार्षी जगती २९ आर्षी-त्रिष्टुप् ३१ निचृद् ब्राह्मी त्रिष्टुप् ३२ निचृदनुष्टुप् ३३ भुरिक् पंक्तिः ३४ ।

स्वरः-धैवतः १, ७, १८, १९, २२, ३०—३२ पञ्चमः २, १०, ११, १३, १५, १७, ३४ ऋषभः [क] निषादः [२] ३ निषादः [१] पञ्चमः [२], [४] मध्यमः [३] गान्धारः [क] धैवतः [५] ४ ऋषभः ५, २८ मध्यमः ६, ९, २१ निषादः ८, १४, १६, २३—२५, २९ गान्धारः १२, २६, ३३ षड्जः २०, २७ ॥

॥ ओ३म् ॥ अपो देवा मधुमतीरगृभ्णन्नूर्जस्वती राजस्वश्चितानाः । याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥ १ ॥ वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा । वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहि । वृषसेनोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा । वृषसेनोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि ॥ २ ॥ अर्थेत स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहार्थेत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तौजस्वती स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापः परिवाहिणी स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहापः परिवाहिणी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापाम्पतिरसि राष्ट्रदा राष्ट्रम्मे [२] देहि स्वाहाऽपाम्पतिरसि राष्ट्रदा राष्ट्रममुष्मै देह्यपां गर्भोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहाऽपाङ्गर्भोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि ॥ ३ ॥ [१] सूर्य्यत्वचस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्य्यत्वचस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त [२] सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त मान्दा स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त [३] व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा [क] व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त वाशा स्थ राष्ट्रदा [२] राष्ट्रम्मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त [३] शविष्ठा स्थ राष्ट्रदा राष्ट्रं मे दत्त

स्वाहा शविष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त शक्करी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्करी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त जनभृत स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा जनभृतं स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त विश्वभृतस्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्वभृतं स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापः स्वराज स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त । मधुमतीर्मधुमतीभिः पृच्यन्ताम्महि क्षत्रं क्षत्रियाय वन्वाना अनाधृष्टाः सीदत सहौजसो महि क्षत्रं क्षत्रियाय दधतीः ॥ ४ ॥ सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयात् । अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहेन्द्राय स्वाहा घोषाय स्वाहा श्लोकाय स्वाहांऽशाय स्वाहा भगाय स्वाहार्यम्णे स्वाहा ॥५॥ पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । अनिभृष्टमसि वाचो बन्धुस्तपोजाः सोमस्य दात्रमसि स्वाहा राजस्वः ॥ ६ ॥ सधमादो द्युम्निनी राप एता अनाधृष्टा अपस्यो वसानाः । पस्त्यासु चक्रे वरुणः सधस्थमपांऽशिशुर्मातृतमास्वन्तः ॥ ७ ॥ क्षत्रस्योल्वमसि क्षत्रस्य जराय्वसि क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसीन्द्रस्य वार्त्रघ्नमसि मित्रस्यासि वरुणस्यासि त्वयायं वृत्रं बधेत् । दृवासि रुजासि क्षुमासि । पातैनं प्राञ्चम्पातैनं प्रत्यञ्चम्पातैनं तिर्यञ्चन्दिग्भ्यः पात ॥ ८ ॥ आविर्मर्या आवित्तो अग्निर्गृहपतिरावित्त इन्द्रो वृद्धश्रवा आवित्तौ मित्रावरुणौ धृतव्रतावावित्तः पूषा विश्ववेदा आवित्ते द्यावापृथिवी विश्वशम्भुवावावित्तादितिरुरुशर्म्मा ॥ ९ ॥ अवेष्टा दन्दशूकाः प्राचीमारोह गायत्री त्वावतु रथन्तरꣳ साम त्रिवृत् स्तोमो वसन्त ऋतुर्ब्रह्म द्रविणम् ॥ १० ॥ दक्षिणामारोह त्रिष्टुप् त्वावतु बृहत्साम पञ्चदशस्तोमो ग्रीष्म ऋतुः क्षत्रं द्रविणम् ॥ ११ ॥ प्रतीचीमारोह जगती त्वावतु वैरूपꣳ साम सप्तदश स्तोमो वर्षा ऋतुर्विड् द्रविणम् ॥१२॥ उदीचीमारोहानुष्टुप् त्वावतु वैराजꣳ सामैकविꣳशस्तोमः शरदृतुः फलं द्रविणम् ॥ १३ ॥ ऊर्ध्वामारोह पङ्क्तिस्त्वावतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिꣳशौ स्तोमौ हेमन्तशिशिरावृतू वर्चो द्रविणम्प्रत्यस्तन्नमुचेः शिरः ॥ १४ ॥ सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयात् । मृत्योः पाह्योजोऽसि सहोऽस्यमृतमसि ॥ १५ ॥ हिरण्यरूपा उषसो विरोक उभाविन्द्रा उदिथः सूर्यश्च । आरोहतं वरुण मित्र गर्त्तं ततश्चक्षाथामदितिं दितिं च । मित्रोऽसि वरुणोऽसि ॥ १६ ॥ सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेर्भ्राजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण । क्षत्राणां क्षत्रपतिरेध्यति दिद्यून् पाहि ॥ १७ ॥ इमन्देवा असपत्नꣳ सुवध्वं महते क्षत्राय महते

ज्यैष्ठ्याय मह॒ते जान॑राज्या॒येन्द्र॑स्ये॒न्द्रिया॑य । इ॒मम॒मुष्य॑ पु॒त्रम॒मुष्यै॑ पु॒त्रम॒स्यै वि॒श ए॒ष वो॑ऽमी राजा॒ सोमो॒ऽस्माकं॑ ब्राह्म॒णाना॑ᳬ राजा॑ ॥ १८ ॥ प्र पर्व॑तस्य वृष॒भस्य॑ पृ॒ष्ठान्नाव॑श्चरन्ति स्व॒सिच॑ इया॒नाः । ता आव॑वृत्रन्नध॒रागुद॑क्ता॒ अहिं॑ बु॒ध्न्य॒मनु॒ रीय॑माणाः । विष्णो॑र्वि॒क्रम॑णमसि॒ विष्णो॒र्वि॒क्रान्त॑मसि॒ विष्णोः॑ क्रा॒न्तम॑सि ॥ १९ ॥ प्रजा॑पते॒ न त्वदे॒तान्य॒न्यो विश्वा॑ रू॒पाणि॒ परि॒ ता ब॑भूव । यत्का॑मास्ते जुहु॒मस्तन्नो॑ अस्त्व॒यम॒मुष्य॑ पि॒ताऽसाव॒स्य पि॒ता व॒यᳬ स्या॑म॒ पत॑यो र॒यीणा॑ᳬ स्वाहा॑ । रुद्र॒ यत्ते॒ क्रिवि॒ परं॒ नाम॒ तस्मि॑न् हु॒तम॑स्यमे॒ष्टम॑सि॒ स्वाहा॑ ॥ २० ॥ इन्द्र॑स्य॒ वज्रो॑ऽसि मि॒त्रावरु॑णयोस्त्वा प्रशा॒स्त्रोः॑ प्रशि॒षा॑ युनज्मि । अव्य॑थायै त्वा स्व॒धायै॒ त्वाऽरि॑ष्टो॒ अर्जु॑नो म॒रुतां॑ प्रस॒वेन॑ ज॒याप॑म॒ मन॑सा॒ समि॑न्द्रि॒येण॑ ॥ २१ ॥ मा त॑ इन्द्र ते व॒यं तु॑राषा॒डयु॑क्तासो अब्र॒ह्मता॒ वि द॑साम । तिष्ठा॒ रथ॒मधि॒ यं व॑ज्रह॒स्ता र॒श्मीन्दे॑व य॒मसे॒ स्वश्वा॑न् ॥ २२ ॥ अ॒ग्नये॑ गृ॒हप॑तये॒ स्वाहा॒ सोमा॑य॒ वन॒स्पत॑ये॒ स्वाहा॑ म॒रुता॒मोज॑से॒ स्वाहेन्द्र॑स्ये॒न्द्रिया॑य॒ स्वाहा॑ । पृथि॑वि मात॒र्मा मा॑ हिᳬसी॒र्मो अ॒हं त्वाम् ॥ २३ ॥ हᳬसः शु॑चि॒षद्व॒सुर॑न्तरिक्ष॒सद्धोता॑ वेदि॒षदति॑थिर्दुरोण॒सत् । नृ॒षद्व॑र॒सदृ॑त॒सद्व्यो॑म॒सद॒ब्जा गो॒जा ऋ॑त॒जा अ॑द्रि॒जा ऋ॒तम्बृ॒हत् ॥ २४ ॥ इ॒यद॒स्यायु॑र॒स्यायु॒र्मयि॑ धेहि॒ युङ्ङ॑सि॒ वर्चो॑ऽसि॒ वर्चो॒ मयि॑ धे॒ह्यूर्ग॒स्यूर्जं॒ मयि॑ धेहि । इन्द्र॑स्य वां वी॒र्य॒कृतो॑ बा॒हू अ॑भ्यु॒पाव॑हरामि ॥ २५ ॥ स्यो॒नासि॑ सु॒षदा॑सि क्ष॒त्रस्य॒ योनि॑रसि । स्यो॒नामा सी॑द सु॒षदा॒मा सी॑द क्ष॒त्रस्य॒ योनि॒मा सी॑द ॥ २६ ॥ नि ष॑साद धृ॒तव्र॑तो॒ वरु॑णः प॒स्त्या॒स्वा । साम्रा॑ज्याय सु॒क्रतुः॑ ॥ २७ ॥ अ॒भि॒भूर॑स्ये॒तास्ते॒ पञ्च॒ दिशः॑ कल्पन्ता॒म्ब्रह्मँ॒स्त्वं ब्र॒ह्मासि॑ सवि॒तासि॑ स॒त्यप्र॑सवो॒ वरु॑णोऽसि स॒त्यौजा॒ इन्द्रो॑ऽसि॒ विशौ॑जा रु॒द्रोऽसि सु॒शेवः॑ । बहु॑कार॒ श्रेय॑स्कर॒ भूय॑स्क॒रेन्द्र॑स्य॒ वज्रो॑ऽसि॒ तेन॑ मे रध्य ॥ २८ ॥ अ॒ग्निः पृ॒थुर्धर्म॑ण॒स्पति॑र्जुषा॒णो अ॒ग्निः पृ॒थुर्धर्म॑ण॒स्पति॒राज्य॑स्य वेतु॒ स्वाहा॑ । स्वाहा॑कृताः॒ सूर्य॑स्य र॒श्मिभि॑र्यतध्वᳬ सजा॒ताना॑ं मध्य॒मेष्ठ्या॑य ॥ २९ ॥ स॒वि॒त्रा प्र॑स॒वि॒त्रा सर॑स्वत्या॒ वा॒चा त्वष्ट्रा॑ रू॒पैः पू॒ष्णा प॒शुभि॒रिन्द्रे॑णा॒स्मे बृह॒स्पति॑ना॒ ब्रह्म॑णा॒ वरु॑णे॒नौज॑सा॒ऽग्निना॒ तेज॑सा॒ सोमे॑न॒ राज्ञा॒ विष्णु॑ना दश॒म्या दे॒वत॑या॒ प्रसू॑तः॒ प्र स॑र्पामि ॥ ३० ॥ अ॒श्विभ्यां॑ पच्यस्व॒ सर॑स्वत्यै पच्य॒स्वेन्द्रा॑य सु॒त्राम्णे॑ पच्यस्व । वा॒युः पू॒तः प॒वित्रे॑ण प्र॒त्यङ्क्सोमो॒ अति॑स्रुतः । इन्द्र॑स्य॒ युज्यः॒ सखा॑ ॥ ३१ ॥ कु॒विद॒ङ्ग यव॑मन्तो॒ यवं॑ चि॒द्यथा॒ दान्त्य॑नुपू॒र्वं वि॒यूय॑ । इ॒हेहै॑षां कृणुहि॒ भोज॑नानि॒ ये ब॒र्हिषो॒ नम॑उक्तिं॒ यज॑न्ति । उ॒प॒या॒मगृ॑हीतो॒ऽस्य॒श्विभ्यां॑ त्वा॒ सर॑स्वत्यै॒ त्वेन्द्रा॑य त्वा सु॒त्राम्णे॑ ॥ ३२ ॥ यु॒वᳬ सु॒राम॑मश्विना॒ नमु॑चावासु॒रे सचा॑ । वि॒पि॒पा॒ना शु॑भस्पती

इन्द्रं कर्मस्वावतम् ॥३३॥ पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दंसनाभिः । यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥ ३४ ॥

॥ इति दशमोऽध्यायः ॥

——:०:——

# ॥ अथ एकादशोऽध्यायः ॥

ऋषिः—प्रजापतिः १-११ नाभानेदिष्टः १२ कुथ्रिः १३ शुनःशेपः १४—१६ पुरोधाः १७ मयोभूः १८—२२ गृत्समदः २३, २४, २७—३१, ३६ सोमकः २५ पायुः २६ भारद्वाजः ३२—३४ देवश्रवा देववातः ३५ प्रस्कण्वः ३७ सिन्धुद्वीपः ३८—४०, ५०—६१ विश्वमनाः ४१ कण्वः ४२ त्रितः ४३, ४४, ४६—४८ चित्रः ४५ उत्कीलः ४९ विश्वामित्रः ६२—६६ आत्रेयः ६७—६९ सोमाहुतिः ७० विरूपः ७१ वारुणिः ७२ जमदग्निः ७३, ७४ नाभानेदिः ७५-८३ ।

देवता—सविता १-११, ६३, ६७ वाजी १२, १३ क्षत्रपतिः १४, २० गणपतिः १५ अग्निः १६—१९, २४—२९, ३२—३४, ३६, ३७, ४०—४९, ७०—७८ द्रविणोदाः २१, २२, प्रजापतिः २३ दम्पती ३० जायापती ३१ होता ३५ आपः ३८, ५०—५२ वायुः ३९ मित्रः ५३, ६२ रुद्रः ५४ सिनीवाली ५५ अदितिः ५६, ५७, ५९ वसुरुद्रादित्यविश्वेदेवाः ५८ वस्वादयो मन्त्रोक्ताः ६० आदित्यादयो लिङ्गोक्ताः ६१ वस्वादयो लिङ्गोक्ताः ६५ अग्न्यादयो मन्त्रोक्ताः ६६ अम्बा ६८, ६९, सेनापतिः ७९ अध्यापकोपदेशकौ ८० पुरोहितयजमानौ ८१ सभापतिर्यजमानः ८२ यजमानपुरोहितौ ८३ ।

छन्दः—विराडार्ष्यनुष्टुप् १, ३० शङ्कुमती गायत्री २ निचृदनुष्टुप् ३, १८, १९, ३१, ७३, ७९ जगती ४ विराडार्षी त्रिष्टुप् ५, ६ आर्षी त्रिष्टुप् ७, २३, ५९ शक्करी ८ भुरिगतिशक्करी ९ भुरिगनुष्टुप् १०, ४०, ४१, ४८, ७७ आर्षी ११ आस्तारपङ्क्तिः १२

गायत्री १३, १४, ५०—५२, ६८ आर्षी जगती १५ निचृदार्षी त्रिष्टुप् १६, १७, २२ निचृदार्षी बृहती २०, ३७ आर्षी पङ्क्तिः २१, २४ निचृद्गायत्री २५, ३३, ३४, ६२ अनुष्टुप् २६, ५४, ६४, ६७, ८० पङ्क्तिः २७ भुरिक् प्रकृतिः २८ स्वराट् पङ्क्तिः २९ त्रिष्टुप् ३२, ३६, ४९, ६९ निचृत्त्रिष्टुप् ३५ न्यङ्कुसारिणी बृहती ३८ विराट् त्रिष्टुप् ३९, ४३, ७५ उपरिष्टाद् बृहती ४२, ५३, ८३ विराडनुष्टुप् ४४, ५५, ५६, ७४, ८२ विराट् पथ्या बृहती ४५ ब्राह्मी बृहती ४६ विराट् ब्राह्मी त्रिष्टुप् ४७, ६६ भुरिग् बृहती ५७, ६३ उत्कृती [क], [र] ५८ स्वराट् संकृतिः ६० भुरिक् कृतिः [क] प्रकृतिः ६१ धृतिः ६५ विराड् गायत्री ७०, ७१ भुरिगुष्णिक् ७२, ७८ स्वराडार्षी त्रिष्टुप् ७६ निचृदार्षी पङ्क्तिः ८१ ।

स्वरः—गान्धारः १, ३, १०, १८, १९, २६, ३०, ३१, ४०, ४१, ४४, ४८, ५४-५६, ६०, ६४, ६७, ७३, ७४, ७७, ७९, ८०, ८२ षड्जः २, १३, १४, २५, ३३, ३४, ५०–५२, ५८, ६२, ६५, ६८, ७०, ७१ निषादः ४, १५ धैवतः ५—८, १६, १७, २२, २३, २८, ३२, ३५, ३६, ३९, ४३, ४७, ४९, ५९, ६६, ६९, ७५, ७६ पञ्चमः ९, ११, १२, २१, २४, २७, २९, ८१ मध्यमः २०, ३७, ३८, ४२, ४५, ४६, ५३, ५७, ६३, ८३ निषादः [क], धैवतः [र] ६१ ऋषभः ७२, ७८ ॥

॥ ओ३म् ॥ युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः । अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ १ ॥ युक्तेन मनसा वयं देवस्य सवितुः सवे । स्वर्ग्याय शक्त्या ॥ २ ॥ युक्त्वाय सविता देवान्त्स्वर्यतो धिया दिवम् । बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् ॥ ३ ॥ युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥ ४ ॥ युजे वां ब्रह्म पूर्व्यं नमोभिर्विश्लोक एतु पथ्येव सूरेः । शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥ ५ ॥ यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमोजसा । यः पार्थिवानि विममे स एतशो रजाꣳसि देवः सविता महित्वना ॥ ६ देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय । दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु ॥ ७ ॥ इमं नो देव सवितर्यज्ञं प्रणय देवाव्यꣳ सखिविदꣳ सत्राजितन्धनजितꣳ स्वर्जितम् । ऋचा स्तोमꣳ समर्धय गायत्रेण रथन्तरं बृहद्गायत्रवर्त्तनि

स्वाहा ॥ ८ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददे गायत्रेण छन्दसाङ्गिरस्वत्पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभर त्रैष्टुभेन छन्दसाङ्गिरस्वत् ॥ ९ ॥ अभ्रिरसि नार्यसि त्वया वयमग्निꣳ शकेम खनितुꣳ सधस्थ आ । जागतेन छन्दसाङ्गिरस्वत् ॥ १० ॥ हस्त आधाय सविता बिभ्रदभ्रिꣳ हिरण्ययीम् । अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरदानुष्टुभेन छन्दसाङ्गिरस्वत् ॥ ११ ॥ प्रतूर्त्तं वाजिन्ना द्रव वरिष्ठामनु सम्वतम् । दिवि ते जन्म परममन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरित् ॥ १२ ॥ युञ्जाथाꣳ रासभं युवमस्मिन् यामे वृषण्वसू । अग्निं भरन्तमस्मयुम् ॥ १३ ॥ योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ॥ १४ ॥ प्र तूर्वन्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्यं मयोभूरेहि । उर्वन्तरिक्षं वीहि स्वस्तिगव्यूतिरभयानि कृण्वन् पूष्णा सयुजा सह ॥ १५ ॥ पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभराग्निं पुरीष्यमङ्गिरस्वदच्छेमोऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामः ॥ १६ ॥ अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततन्थ ॥ १७ ॥ आगत्य वाज्यध्वानꣳ सर्वा मृधो वि धूनुते । अग्निꣳ सधस्थे महति चक्षुषा नि चिकीषते ॥ १८ ॥ आक्रम्य वाजिन् पृथिवीमग्निमिच्छ रुचा त्वम् । भूम्या वृत्वाय नो ब्रूहि यतः खनेम तं वयम् ॥ १९ ॥ द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षꣳ समुद्रो योनिः । विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यतः ॥ २० ॥ उत्क्राम महते सौभगायास्मादास्थानाद् द्रविणोदा वाजिन् । वयꣳ स्याम सुमतौ पृथिव्या अग्निं खनन्त उपस्थे अस्याः ॥ २१ ॥ उदक्रमीद् द्रविणोदा वाज्यर्वाकः सुलोकꣳ सुकृतं पृथिव्याम् । ततः खनेम सुप्रतीकमग्निꣳ स्वो रुहाणा अधिनाकमुत्तमम् ॥ २२ ॥ आ त्वा जिघर्मि मनसा घृतेन प्रतिक्षियन्तं भुवनानि विश्वा । पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नैरभसं दृशानम् ॥ २३ ॥ आ विश्वतः प्रत्यञ्चं जिघर्म्यरक्षसा मनसा तज्जुषेत । मर्य्यश्री स्पृहयद्वर्णो अग्निर्नाभिमृशे तन्वा जर्भुराणः ॥ २४ ॥ परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ २५ ॥ परि त्वाग्ने पुरं वयं विप्रꣳ सहस्य धीमहि । धृषद्वर्णं दिवेदिवे हन्तारं भङ्गुरावताम् ॥ २६ ॥ त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥ २७ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत् खनामि । ज्योतिष्मन्तं

स्वाग्ने सुप्रतीकमजस्रेण भानुना दीद्यतम् । शिवं प्रजाभ्योऽहिंᳪसन्तं पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत् खनामः ॥ २८ ॥ अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम् । वर्धमानो महाँ२॥ आ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व ॥ २९ ॥ शर्म च स्थो वर्म च स्थोऽछिद्रे बहुले उभे । व्यचस्वती संवसाथां भृतमग्निं पुरीष्यम् ॥ ३० ॥ संवसाथाᳩस्वर्विदा समीची उरसा त्मना । अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित् ॥ ३१ ॥ पुरीष्योऽसि विश्वभरा अथर्वा त्वा प्रथमो निरमन्थदग्ने । त्वामग्ने पुष्करादध्यथर्वा निरमथन्त । मूर्ध्नो विश्वस्य वाघतः ॥ ३२ ॥ तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरन्दरम् ॥ ३३ ॥ तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनञ्जयᳪ रणेरणे ॥ ३४ ॥ सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञᳪ सुकृतस्य योनौ । देवावीर्देवान्हविषा यजास्यग्ने बृहद्यजमाने वयोधाः ॥ ३५ ॥ नि होता होतृषदने विदानस्त्वेषो दीदिवाँ२॥ असदत्सुदक्षः । अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः ॥ ३६ ॥ सᳪ सीदस्व महाँ२॥ असि शोचस्व देववीतमः । विधूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् ॥ ३७ ॥ अपो देवीरुप सृज मधुमतीरयक्ष्माय प्रजाभ्यः । तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः ॥ ३८ ॥ सन्ते वायुर्मातरिश्वा दधातूत्तानाया हृदयं यद्विकस्तम् । यो देवानां चरसि प्राणथेन कस्मै देव वषडस्तु तुभ्यम् ॥ ३९ ॥ सुजातो ज्योतिषा सह शर्म वरूथमासदत्स्वः । वासो अग्ने विश्वरूपᳪ संव्ययस्व विभावसो ॥ ४० ॥ उदु तिष्ठ स्वध्वराऽवा नो देव्या धिया । दृशे च भासा बृहता सुशुक्वनिराग्ने याहि सुशस्तिभिः ॥ ४१ ॥ ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता । ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ ४२ ॥ स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु । चित्रः शिशुः परि तमाᳩस्यक्तून् प्र मातृभ्यो अधि कनिक्रदद्गाः ॥ ४३ ॥ स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः ॥ ४४ ॥ शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः । मा द्यावापृथिवी अभि शोचीर्मान्तरिक्षं मा वनस्पतीन् ॥ ४५ ॥ प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा । भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा । वृषाग्निं वृषणं भरन्नपां गर्भᳪ समुद्रियम् । अग्न आयाहि वीतये ॥ ४६ ॥ ऋतᳪ सत्यमृतᳪ सत्यमग्निं पुरीष्यमङ्गिरस्वद्भरामः । ओषधयः प्रतिमोदध्वमग्निमेतᳪ शिवमायन्तमभ्यत्र युष्माः । व्यस्यन् विश्वा अनिरा अमीवा निषीदन्नो अप दुर्मतिं जहि ॥ ४७ ॥ ओषधयः प्रति गृभ्णीत

पुष्पवतीः सुपिप्पलाः । अयं वो गर्भ ऋत्वियः प्रत्नꣳ सधस्थमासदत् ॥ ४८ ॥ विपाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः सुशर्मणो बृहतः शर्मणि स्यामग्नेरहꣳ सुहवस्य प्रणीतौ ॥ ४९ ॥ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ ५० ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ ५१ ॥ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ ५२ ॥ मित्रः सꣳसृज्य पृथिवीं भूमिं च ज्योतिषा सह । सुजातं जातवेदसमयक्ष्माय त्वा सꣳसृजामि प्रजाभ्यः ॥ ५३ ॥ रुद्राः सꣳसृज्य पृथिवीं बृहज्ज्योतिः समीधिरे । तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते ॥ ५४ ॥ सꣳसृष्टां वसुभी रुद्रैर्धीरैः कर्मण्यां मृदम् । हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु ताम् ॥ ५५ ॥ सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा । सा तुभ्यमदिते मह्योखां दधातु हस्तयोः ॥ ५६ ॥ उखां कृणोतु शक्त्या बाहुभ्यामदितिर्धिया । माता पुत्रं यथोपस्थे साग्निं बिभर्तु गर्भ आ । मखस्य शिरोऽसि ॥ ५७ ॥ [क] वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाऽङ्गिरस्वद्ध्रुवासि पृथिव्यसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानाय रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानायाऽऽदित्यास्त्वा कृण्वन्तु जागतेन छन्दसाऽङ्गिरस्वद्ध्रुवासि द्यौरसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानाय विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाङ्गिरस्वद्ध्रुवासि दिशोऽसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानाय । ५८ ॥ अदित्यै रास्नास्यदितिष्टे बिलं गृभ्णातु । कृत्वाय सा महीमुखां मृन्मयीं योनिमग्नये । पुत्रेभ्यः प्रायच्छददितिः श्रपयानिति ॥ ५९ ॥ वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाङ्गिरस्वद् रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदादित्यास्त्वा धूपयन्तु जागतेन छन्दसाङ्गिरस्वत् । विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाङ्गिरस्वदिन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु ॥ ६० ॥ [क] अदितिष्ट्वा देवी विश्वदेव्यावती पृथिव्याः सधस्थे अङ्गिरस्वत् खनत्ववट देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वद्दधतूखे । धिषणास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वदभीन्धताम् [र] उखे वरूत्रीष्ट्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वच्छ्रपयन्तूखेऽग्नास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वत्पचन्तूखे जनयस्त्वा छिन्नपत्रा दे-

वीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वत्पचन्तूखे ॥ ६१ ॥ मित्रस्य चर्षणीधृतोऽवो देवस्य सानसि । द्युम्नं चित्रश्रवस्तमम् ॥ ६२ ॥ देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्या । अव्यथमाना पृथिव्यामाशा दिश आपृण ॥ ६३ ॥ उत्थाय बृहती भवोदु तिष्ठ ध्रुवा त्वम् । मित्रैतां त उखां परि ददाम्यभित्या एषा मा भेदि ॥ ६४ ॥ वसवस्त्वा छृन्दन्तु गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वा छृन्दन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदादित्यास्त्वा छृन्दन्तु जागतेन छन्दसाङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा आछृन्दन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत् ॥६५॥ आकूतिमग्निम्प्रयुजꣳ स्वाहा मनो मेधामग्निम्प्रयुजꣳ स्वाहा चित्तं विज्ञातमग्निम्प्रयुजꣳ स्वाहा वाचो विधृतिमग्निम्प्रयुजꣳ स्वाहा । प्रजापतये मनवे स्वाहाऽग्नये वैश्वनराय स्वाहा ॥ ६६ ॥ विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा ॥ ६७ ॥ मा सु भित्था मा सु रिषोऽम्ब धृष्णु वीरयस्व सु । अग्निश्चेदं करिष्यथः ॥ ६८ ॥ दृꣳहस्व देवि पृथिवि स्वस्तय आसुरी माया स्वधया कृतासि । जुष्टं देवेभ्य इदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन् ॥ ६९ ॥ द्रन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः । सहसस्पुत्रो अद्भुतः ॥ ७० ॥ परस्या अधि संवतोऽवराँ२॥ अभ्यातर । यत्राहमस्मि ताँ२॥ अव ॥ ७१ ॥ परमस्याः परावतो रोहिदश्व इहा गहि । पुरीष्यः पुरुप्रियोऽग्ने त्वं तरा मृधः ॥७२॥ यदग्ने कानि कानि चिदा ते दारूणि दध्मसि । सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य ॥ ७३ ॥ यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति । सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य ॥ ७४ ॥ अहरहरप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै । रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रतिवेशा रिषाम ॥७५॥ नाभा पृथिव्याः समिधाने अग्नौ रायस्पोषाय बृहते हवामहे । इरम्मदं बृहदुक्थं यजत्रं जेतारमग्निं पृतनासु सासहिम् ॥ ७६ ॥ याः सेना अभीत्वरीराव्याधिनीरुगणा उत । ये स्तेना ये च तस्करास्ताँस्ते अग्नेऽपि दधाम्यास्ये ॥ ७७ ॥ दꣳष्ट्राभ्यां मलिम्लून् जम्भ्यैस्तस्कराँ२॥ उत । हनुभ्याꣳ स्तेनान् भगवस्ताँस्त्वं खाद सुखादितान् ॥ ७८ ॥ ये जनेषु मलिम्लवस्स्तेनासस्तस्करा वने । ये कक्षेष्वघायवस्ताँस्ते दधामि जम्भयोः ॥ ७९ ॥ यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः । निन्दाद्यो अस्मान् धिप्साच्च सर्वं तं भस्मसा कुरु ॥ ८० ॥ सꣳशितं मे ब्रह्म सꣳशितं वीर्यं बलम् । सꣳशितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहितः ॥ ८१ ॥ उदेषां बाहू अतिरमुद्वर्चो अथो बलम् । क्षिणोमि ब्रह्मणामि-

भानुर्नयामि स्वाँ२॥ अहम् ॥ ८२ ॥ अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्रप्र दातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥ ८३ ॥

॥ इत्येकादशोऽध्यायः ॥

——:o:——

## ॥ अथ द्वादशोऽध्यायः ॥

---

ऋषिः–वत्सप्रीः १, २, ६–१०, १८–२१, ३३, ४० श्यावाश्वः ३–५ ध्रुवः ११ शुनःशेपः १२ त्रितः १३–१७ विरूपः ३०, ३६–३९, ११६ तापसः ३१, ३२ वसिष्ठः ३४, ३५ वत्सप्रीः ४१ दीर्घतमः ४२ सोमाहुतिः ४३–४६ विश्वामित्रः ४७–५४ प्रियमेधा ५५ सुतजेदमधुच्छन्दा ५६ मधुच्छन्दा ५७–६५ विश्वावसुः ६६–६८ कुमारहारितः ६९–७४ भिषग् ७५–९० वरुणः ९१–१०१, हिरण्यगर्भः १०२–१०५ पावकाग्निः १०६–१११ गोतमः ११२–११४ वत्सारः ११५ प्रजापतिः ११७ ।

देवता–अग्निः १, २, ६–११, १३, १५–३४, ३६–४४, ४६–५४, ५७–५९, ६६, १०३, १०४, १०६, १०८, १०९, १११, ११५–११७ सविता ३ गरुत्मान् ४ विष्णुः ५ वरुणः १२ जीवेश्वरौ १४ आपः ३५, ५५ पितरः ४५ इन्द्रः ५६ दम्पती ६० पत्नी ६१ निर्ऋतिः ६२–६४ यजमानः ६५ कृषीवलाः कवयो वा ६७, ६८ कृषीवलाः ६९–७१ मित्रादयो लिङ्गोक्ताः ७२ अघ्न्याः ७३ अश्विनौ ७४ वैद्यः ७५–७७, ७९, ८३, ८४, ८८–९३, ९५, ९६, ९८, १०० चिकित्सुः ७८ ओषधयः ८०, ८२ वैद्यः ८१, ८५–८७ भिषजः ९४, १०१ भिषग्वराः ९७ ओषधिः ९९ कः १०२ विद्वान् १०५, १०७, ११० सोमः ११२–११४ ।

छन्दः—भुरिक्पङ्क्तिः १, २५ भुरिगार्षी त्रिष्टुप् २, ४६ विराड् जगती

३ धृतिः ४ भुरिगुत्कृतिः ५ निचृदार्षी त्रिष्टुप् ६, १८—२२, ३३, ३४, ४५, १०२ भुरिगार्ष्यनुष्टुप् ७ आर्षीत्रिष्टुप् ८, ४७ निचृदार्षीगायत्री ९, ४०, ७३ निचृद्गायत्री १०, ३६, ४१ आर्ष्यनुष्टुप् ११ विराडार्षी त्रिष्टुप् १२, २६—२९, ४२, ६३ भुरिगार्षी पङ्क्तिः १३, ४८, ४९, ५१ स्वराड् जगती १४ विराट् त्रिष्टुप् १५ विराडनुष्टुप् १६, १७, ३१, ३२, ५४, ५५, ८२, ८४, ८७—८९, ९४, ९५, ९९ आर्ची त्रिष्टुप् २३ गायत्री ३०, ६७, ११६, ११७ आर्षी त्रिष्टुप् ३४, ३५, ६१, ६४, ७० भुरिगार्ष्युष्णिक् ३७ निचृदार्ष्यनुष्टुप् ३८, ५२ निचृदनुष्टुप् ३९, ५६, ७७, ८३, ८६, ९२, ९६, ९८, १०१ आर्षीपङ्क्तिः ४३, ५०, ६०, ७२, ११० स्वराडार्षी त्रिष्टुप् ४४ स्वराडनुष्टुप् ५३ भुरिगुष्णिक् ५७, ५९, ९० भुरिगुपरिष्टाद्बृहती ५८ निचृत् त्रिष्टुप् ६२ आर्षी जगती ६५, ७४ विराडार्षी त्रिष्टुप् ६६, ६८ त्रिष्टुप् ६९ विराट् पङ्क्तिः ७१ अनुष्टुप् ७५, ७६, ७८—८१, ८५, ९१, ९७ विराडार्ष्यनुष्टुप् ९३ विराड्बृहती १०० निचृदुष्णिक् १०३ भुरिग्गायत्री १०४ विराट् त्रिष्टुप् १०५ निचृत्पङ्क्तिः १०६, १०८ भुरिगार्षी पंक्तिः १०७, ११३ निचृदार्षी पङ्क्तिः १०९ स्वराडार्षी पङ्क्तिः १११ निचृद्गायत्री ११२, ११५ आर्ष्युष्णिक् ११४ ॥

स्वरः—पञ्चमः १, १३, २४, ४३, ४८—५१, ६०, ६३, ७१, ७२, १०६—१११, ११३ धैवतः २, ६, १२, १५, १८—२४, २६—२९, ३३—३५, ३८, ४२, ४४—४७, ६१, ६२, ६४, ६६, ६८—७०, १०२, १०५ निषादः ३, ८, १४, ६५, ७४ ऋषभः ४, ३७, ५७, ५९, ९०, १०३, ११२ षड्जः ५, ९, १०, ३०, ३६, ४०, ४१, ६७, ७३, १०४, ११४, ११५—११७ गान्धारः ७, ११, १६, १७, ३१, ३२, ३९, ५२—५६, ७५—८९, ९१—९९, १०१ मध्यमः ५८, १०० ॥

॥ ओ३म् ॥ दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः । अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः ॥ १ ॥ नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची । द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन्द्रविणोदाः ॥२॥ विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे । वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो विराजति ॥ ३ ॥ सुपर्णोऽसि गरुत्माँस्त्रिवृत्ते शिरो गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ स्तोम आत्मा छन्दाꣳस्यङ्गानि यजूꣳषि नाम । साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः शफाः । सु-

पुर्णोऽसि गुरुत्मान्दिवं गच्छ स्वः पत ॥ ४ ॥ विष्णोः क्रमोऽसि सपत्नहा गायत्रं छन्द आरोह पृथिवीमनु वि क्रमस्व विष्णोः क्रमोऽस्यभिमातिहा त्रैष्टुभं छन्द आरोहान्तरिक्षमनु वि क्रमस्व । विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं छन्द आरोह दिवमनु वि क्रमस्व विष्णोः क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभं छन्द आरोह दिशोऽनु वि क्रमस्व ॥ ५ ॥ अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो विहीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ ६ ॥ अग्नेऽभ्यावर्त्तिन्नभि मा नि वर्त्तस्वायुषा वर्चसा प्रजया धनेन । सन्या मेधया रय्या पोषेण ॥ ७ ॥ अग्ने अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः । अधा पोषस्य पोषेण पुनर्नो नष्टमा कृधि पुनर्नो रयिमा कृधि ॥ ८ ॥ पुनरूर्जा नि वर्त्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यꣳहसः ॥ ९ ॥ सह रय्या नि वर्त्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परि ॥ १० ॥ आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधिभ्रशत् ॥ ११ ॥ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ १२ ॥ अग्र बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान् तमसो ज्योतिषागात् । अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः ॥१३॥ हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ १४ ॥ सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् । मैनां तपसा मार्चिषाऽभिशोचीरन्तरस्याꣳ शुक्रज्योतिर्वि भाहि ॥ १५ ॥ अन्तरग्ने रुचा त्वमुखायाः सदने स्वे । तस्यास्त्वꣳहरसा तपञ्जातवेदः शिवो भव ॥ १६ ॥ शिवो भूत्वा मह्यमग्ने अथो सीद शिवस्त्वम् । शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासदः ॥ १७ ॥ दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः । तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥ १८ ॥ विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ ॥ १९ ॥ समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् । तृतीये त्वा रजसि तस्थिवाꣳसमपामुपस्थे महिषा अवर्धन् ॥२०॥ अक्रन्ददग्निस्तनयन्निव द्यौः क्षामारेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो विहीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ २१ ॥ श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः । वसुः सूनुः सहसो अप्सु राजा वि भात्यग्र उषसामिधानः ॥ २२ ॥ विश्वस्य के-

